# सारमञ्जरी।

श्रीजयकृष्ण तर्कालङ्कार भट्टाचार्य्य विरचिता।

श्रीवैकुण्ठनाथ न्यायरत्न भट्टाचार्य्य विरचित

विवरण सहिता।

श्रीविश्वेश्वर भट्टाचार्य्येण संशोधिता।

तदाज्ञया

श्रीयुत जगन्नाथ प्रसाद वर्म्मणा

वाराणसी

धर्म्मामृत यन्त्रालये

मुद्रयित्वा प्रकाशिता।

प्रथम संस्करणम्।

शकाब्दाः। १८०९

मूल्य ।/) छः आना

श्रीगणेशायनमः।

# अथ सारमञ्जरी।

—···✻○✻○✻···—

हेरम्बचरणद्वन्द्वं विघ्ननाशकरं परं।
प्रणम्य जयकृष्णेन क्रियते सारमञ्जरी॥ (१)

---

श्री गंगाधर तातपाद ममलं स्मृत्वा च नत्वानिशं
श्री काशीतलवाहिनीषुमिलितां स्नात्वा मणे कर्णिकां॥✻
श्री वैकुण्ठसुकोविदे जलदलैः संपूज्य विश्वेश्वरं
श्री काशीश्वरपादपद्मयुगले न्यस्तं समस्तं मुदा॥१॥
श्रीमन्नारायणं नत्वा काशीशंच सपुत्रकं।
तनुते सारमञ्जर्य्याः विवृतिं वान्तिगोपिता॥२॥

(१)—इह खलु संसारसन्तापशान्तये वाक्यमय शास्त्रेषु वाक्यार्थं विवरणाय मंगलमाचरति। हेरम्बेति, सारमञ्जरीति। सारः शब्दार्थस्तस्य मञ्जरी अन्वयबोधः। तत्र शब्दोद्विविधः प्रकृति प्रत्यय भेदात्। प्रकृतिः प्रातिपदिकादिकं, प्रत्ययः सुपि-

---

✻मिलितामितितयेत्यादिः। कर्णिकामितिसुत्वेतिशेषः।

तत्र (२) प्रथमतः कालत्रयनिरूपणं ।
वर्त्तमान ध्वंस प्रतियोगित्वमतीतत्वं ।
वर्त्तमान प्रागभाव प्रतियोगित्वं भविष्यत्वं
स्वावच्छिन्न कालवृत्तित्वं वर्त्तमानत्वं ।
(२) अथ लकारादौ शक्तिनिरूपणं ।
तत्र लटो वर्त्तमानत्वं । विधिलिङो भवि-

---

ङादयः । तिङां आख्यात संज्ञा लड़ादि संज्ञा एकवचनादिसंज्ञा । आख्यातत्वेन कृत्याद्यभिहिता, लट्त्वादिना वर्त्तमान त्वाद्यभिहिता, एकवचनादिना एकत्वाद्यभिहिता, एतेन शक्तित्रयं सिद्धं । नचानेक शक्ति स्वीकारे नानार्थत्वापत्तिरितिवाच्यं, नियत त्रितय विषयक बोधजनकत्वेन विभिन्नधर्म्मावच्छिन्नत्वेन च स्वतंत्र शक्तिस्वीकारादतएव विवक्षावशादेकत्वादिभानं साधुसंगतं अन्यथाजनितान्वयस्य निराकांक्षत्वेन अर्थद्वय बोधासंभव इति चिन्तनीयं ॥

(२)—तत्रेति । शब्दार्थेषु मध्ये ।

(२)—वर्त्तमानत्वमिति । तिवादि प्रयोगः स्वपदार्थः । जन्यानां कालोपाधित्वमते स्वाश्रयत्वं स्ववृत्तित्वं

ष्यत्वं विधिः संभावनाच्च विधिः कर्त्तव्यतो (४) पदेशः संभावना (५) कल्पन। लोटो भविष्यत्वं आशीः प्रेरणाच, आशीः शुभचिन्तनं, प्रेरणं प्रवर्त्तनं। आशीर्लिङो-भविष्यत्वं आशीश्च। लुट्लृटो र्भविष्यत्वं। तव्यानीययो र्भविष्यत्वं विधिश्च। लङ्लुङो (६) रतीतत्वं। लिटोवक्तृपरोक्षत्वमतीतत्वंच। लृङोऽतीतत्वं क्रियातिक्रमश्च कुतश्चिद्वैगुण्यात् क्रियाया अनिष्पत्तिः क्रियातिक्रमः। यङः क्रियासमभिव्याहारोति-

---

लाघवात्। तद्नभ्युपगमे स्वावच्छिन्नेति प्रयोगावच्छिन्नेत्यर्थः।

(४)—कर्त्तव्यतेति। बलवदनिष्टाननुबंधित्व विशिष्ट इष्ट साधनता नतु कृतिसाध्यता "श्येनेनाभिचरण यजेत" इत्यादिना वेदानर्थक्यापत्तेः प्रवृत्तिस्तु रागादिना।

(५)—संभावनेति। संशय विषयताविशेषः सम्भावना, स च औत्कटयरूपः।

(६)—लुङिति। मां समभिव्याहृत लुङोभविष्यत्वं।

श्रयित्वं। सनो धात्वर्थविषयिणीच्छा समान कर्तृकत्वेभिधानं। णिचो हेतुमान् (७) प्रयोजकव्यापारः। क्त्वो (८) वर्त्तमानत्वं। शतृशानयो र्वर्त्तमानत्वमेककर्तृत्वमेककाली नत्वंच। क्त क्तवतु प्रत्यययो रतीतत्वं। तुम् वुनोः (९) क्रियार्थाक्रिया एककर्तृकत्वं- च, उद्देश्यता सम्बन्धेन क्रियानिमित्तीभूत क्रिया क्रियार्थाक्रिया। क्तिन् घञ् ल्युटां काल सामान्यो भावश्च, भावो (१०) धात्वर्थः। क्त्वाच् ल्यपो भाव आनन्तर्य्ये क्रियासमान कर्त्तृकत्वमपीतिसंक्षेपः।—

अथ लकार स्थानीय-तिङां आख्यात

---

(७)—हेतुमानिति। स च धात्वर्थानुकूल व्यापार इति यावत्।

(८)—क्त्वइति। क्त्वोऽपि एककर्त्तृत्वमेककाली- नत्वंच।

(९)—तुम्वुनेति। भविष्यत्त्वमप्यर्थः।

(१०)—भावेति। वृत्तिरितिशेषः।

पदवाच्यत्व । सचाख्यात स्त्रिविधः ( ११ ) कर्त्तृविहितः कर्म्मविहितो भावविहित- श्चेति। तत्र कर्त्तृविहिताख्यातस्य कृता- वेव शक्तिः ( १२ ) कृतित्व रूप शक्यता वच्छेदक लाघवात् नकर्त्तरि, शक्यता- वच्छेदक कृतेरननुगमात् ( १३ ) नचा ख्यातेन कर्त्तु रनभिधानेन चैत्रः पचती- त्यत्र चैत्र पदादनन्तरं तृतीयापत्तिः । लका-

---

(११)—त्रिविध इति । अन्वयितावच्छेदक व्यापक तत्तत्संख्याश्रय धर्म्मवान् विधप्रत्ययार्थः । अन्वयिता- वच्छेदका निष्ठ व्याप्यत्वं च स्वाश्रयत्व स्वाश्रयवद् न्यत्वोभय संबन्धेन, आश्रयत्व इय आश्रयवत्त्वं च, स्व समानाधिकरण भेदप्रतियोगितावच्छेदकत्वं स्व सामानाधिकरण्यमेतदुभय सम्बन्धेन, सम्बन्ध घटकावच्छेदकत्वं च निरवच्छिन्नं ग्राह्यं नातः सखण्ड धर्म्मावच्छिन्न भेदमादाय दोष इति ।

(१२)—कृतावेवशक्तिरिति । एवकारेणकर्त्ता व्यव- च्छिद्यत इति ।

(१३)—शक्यतावच्छेदक कृतेरननुगमादिति ।

रेणानभिहितत्वा दितिवाच्यं, कर्त्तृगत संख्याभिधानानभिधानाभ्यां तृतीयादे-र्व्यवस्थापितत्वात् ( १४ )। एवं व्यापारेऽपि नंशक्तिः कृत्यादिसाधारण यावद्व्यापारानु-गतैक धर्म्माभावात्। अथाच कर्त्तृविहिता ख्यातस्य ( १५ ) कृतौ वर्त्तमानत्वादौ एक-त्वादौ च शक्तिः सिद्धा । तत्र शाब्दबोधे कृतावेव वर्त्तमानत्वादिकं, ( १६ ) एकत्वा-दिकंच कर्त्तर्य्येव प्रतीयते। एक पदोपात्त

---

यद्यपि कृतित्वेन शक्यतावच्छेदकानुगमे नायं दोषः। तथापि कृतित्वस्यानन्तकृतेश्च नानावच्छेद कत्व कल्पना रूप गौरवेण दूषितमितिभावः।

( १४ )—व्यवस्थापितत्वादिति । आख्यातेन कर्म्म गत संख्या नाभिधान एव द्वितीयादेर्व्यवस्थापि तत्वादिति।

( १५ )—आख्यातस्येति। आख्यातत्वादिर्नतिशेषः। एवमग्रेपि।

( १६ )—कृतावेवेति, वर्त्तमानत्वादिकमिति। कृति नाशादिवाचे ऽपि धात्वर्थीभूत विक्लृत्त्यनुकूल

पदार्थयो र्नविशेषण विशेष्य भावेना न्वयबो-
ध इति व्युत्पत्ते रस्वीकारादननुभवाच्च ।
अथ कर्म्मविहिताख्यातस्य फले शक्ति र्न-
कर्म्मणि । फलन्तु धात्वर्थतावच्छेदक । अत-
एव धातोः फलावच्छिन्न व्यापार बोधकत्वे
नैव सकर्म्मकत्वं । तदबोधकत्वे चाकर्म्मकत्व
मितिबोध्यं । कर्म्माख्यातस्य फले वर्त्तमान
त्वादावेकत्वादौ च शक्तिः । शाब्दबोधेतु
वर्त्तमानत्वं फले एकत्वादिकं च फलाश्रये
कर्म्मण्येव प्रतीयते । तेन तण्डुलः पच्यत
इत्यत्र तण्डुल पदोत्तरं नद्वितीया कर्म्मगत
संख्याभिधानेन द्वितीयाया बाधितत्वात् ।
अथ भाव विहिताख्यातस्य धात्वर्थं एव
शक्तिः अत्र संख्यानन्वितैव तत्र प्रथमान्त

---

क्रियायाः सत्वात्तदानीं पचतीति प्रयोग वारणाय
कृतौ वर्त्तमानत्वादेरन्वयः स्वीकृतः । सविषयक
पदार्थाभिधायि जानातीत्यादौ ज्ञानाद्यनुकूल
व्यापारस्य कर्त्तृत्व रूपत्वे मनोजानातीत्याद्यपि
स्यात् अत आश्रयत्वं कर्त्तृत्वं । घटो नश्यतीत्यादौ

पदाभावात्। आख्यातेन यत्र संख्योक्ता, तत्र प्रथमान्त पदोपस्थाप्य पदार्थान्वितत्वेन क्लृप्तत्वात्। एकवचनन्तु प्रयोग साधुत्वार्थं मेवेति भावः।—

अथाख्यातस्य विशेषार्थं कथनं। सविषयक पदार्था (१७) भिधायि धातूत्तर कर्त्तृ विहिताख्यातस्या श्रयत्वे लक्षणा यथा करोति, द्वेष्टि, यजते, जानाति, इच्छतीत्यादयः। एवमचेतने रथोगच्छतीत्यत्र व्यापाराश्रयत्वे लक्षणा। नश्यती त्यत्र प्रति योगित्वेलक्षणा। अतएव नश्यति (१८) नंक्ष्यति नष्टत्यादौ वर्त्तमानत्वादिकं प्रतियोगित्व एवान्वयेति॥

---

यद्याश्रयत्वं कर्त्तृत्वं, तदा कपलादौ नाशाश्रये ऽति व्याप्तं घटादावव्याप्तं चातः प्रतियोगित्वं।

(१७)—सविषयक पदार्थेति। ज्ञानेच्छाद्वेषकृती नां सविषयकत्वमिति।

(१८)—नश्यतीति। आख्यातार्थं प्रतियोगित्वादेव नश्यतीत्यत्रातीत नाश प्रतियोगिनि घटे ऽतिप्रसंग

अथ शाब्दबोध प्रकारः कथ्यते । ( १८ )

यथा तण्डुलं पचतीत्यत्र, तण्डुलपदेन

---

भिया वर्त्तमानतवस्य धात्वर्थे ऽन्वयो नक्तः, एवं नष्ट इत्यत्र वर्त्तमान ध्वंस प्रतियोगित्वस्य बाध भिया धात्वर्थे ऽन्वयो नक्तः नंक्ष्यतीत्यत्र एक पदार्थापर पदार्थयो विंशेष्य विशेषण भावेनान्वय इति नियमस्य नित्यतां स्वीकारे किं बीजमिति चेन्न आख्याताथे कालान्वयस्यैकविधत्व लाभायेति ।

( १८ )—शाब्दबोध प्रकारः कथ्यत इति । शाब्दस्तु त्यजि गमि प्रभृतीनां स्पन्दात्मक व्यापार एवार्थः द्वितीया कर्म्माख्यातयोः फलमर्थः जन्यजनकभावस्य विनैव पदार्थत्वं सम्बन्ध मर्य्यादया भानं । नचैवं ग्रामं त्यजति गच्छतीत्यनयो स्त्यज्यते गम्यते वा ग्राम इत्यनयोश्चाविलक्षण बोध जनकत्व प्रसंग इति वाच्यं, संयोगत्वादिना फलविशेषान्वयबोधे धातुविशेषजन्याया व्यापारोपस्थितेरेव हेतुत्वेन वैलक्षण्यात् । एवञ्च चैत्रो ग्रामं गच्छतीत्यत्र गमि-समभिव्याहृत ग्रामपदोत्तर द्वितीयया संयोगत्वेन

तण्डुल पदार्थो पस्थितिः। द्वितीयया क-

---

संयोगोपस्थितिस्तत्र प्रकृत्यर्थे ग्रामादेराधेयत्वं संसर्गः गम धातुना स्पन्दोपस्थितिस्तत्र द्वितीयार्थ फलस्य जनकत्वं संसर्गः आख्यातेन कृत्युपस्थिति स्तत्र आत्वर्थस्पन्दस्य अनुकूलत्वं संसर्गः आख्यातार्थे कृतेश्चैत्र पदार्थोद्भवाश्रयत्वं संसर्गस्तथाच ग्रामवृत्ति संयोगजनक स्पन्दानुकूल कृत्याश्रयश्चैत्र इतिबोधः। एवं चैत्रो ग्रामं त्यजतीत्यादौ त्यजिसमभिव्याहृत द्वितीयया विभागत्वेन विभागोपस्थितिः शेषं पूर्ववत्। तथाच ग्रामवृत्ति विभागजनकस्पन्दानुकूल कृत्याश्रयश्चैत्र इतिबोधः एवं चैत्रेण गम्यते ग्राम इत्यादौ गमिसमभिव्याहृत कर्माख्यातेन संयोगत्वेन संयोगोपस्थितिः चैत्रपदोत्तर तृतीयया कृत्युपस्थितिः, तत्रप्रकृत्यर्थे चैत्रस्याधेयत्व संसर्गस्तथाच चैत्रवृत्ति कृतिजन्य स्पन्दजन्य संयोगवान् ग्राम इति बोधः। एव चैत्रेण त्यज्यते ग्राम इत्यादौ त्यजिसमभिव्याहृत कर्माख्यातेन विभागत्वेन विभागोपस्थित्या चैत्रीय कृति जन्य विभागवान् ग्राम इतिबोधः। ग्रामंगच्छतीति वत् ग्रामं स्पन्दते

· र्म्मताहृप फलोपस्थितिः वृत्तित्वं संसर्गस्तेन

---

इत्यादयो न प्रयोगाः द्वितीयादे र्गम्याद्युपस्थापित स्पन्दादावेव फलान्वयबोधकत्वेन स्पन्दाद्युपस्थापिते स्पन्दे द्वितीयादेः,फलान्वय बोधजनने निराकांक्ष्यत्वात्, नच समभि व्याहाररूपाया आकांक्षाया अविशेष इतिवाच्यं, द्वितीयादेर्गम्यादिसमभिव्याहारस्यैव फलबलेनान्वयबोधौपयिकत्वोपगमेन स्पन्दादि समभिव्याहारस्या कांक्षत्वाभावात्, अन्वयबोधौपयिक समभिव्याहारस्यैव तथात्वादतएव गम्यादेरिव स्पन्दादेर्न सकर्म्मकत्वव्यवहारः फलान्वित व्यापारबोधक धातुत्वस्यैवस कर्म्मकत्व व्यवहार नियामकत्वात् । एवं तत्तद्धात्वर्थान्वित फलवत्वं तत्तद्धातु कर्म्मत्व नातो गम्यादेः पूर्व्वस्मिन् त्यजेरुत्तरस्मिन् स्पन्देचोभयस्मिन् देशे कर्म्मत्व प्रसंगः। नच तथापि कर्म्मप्रत्यया समभिव्याहृत त्यजति गच्छति त्यागो गमनमित्यादितो ऽविलक्षण बोधापत्तिरिति वाच्यं । तत्र त्यजि गमि प्रभृतेस्तत्तत् फलावच्छिन्नव्यापारे ऽनाद्दि तात्पर्य्य कल्पनादित्याहुः । नव्यास्तुसंयोगादिरूप फलविशेषावच्छिन्न स्पन्दो गम्याद्यर्थः । तत्तद्धात्वर्थ

तच्छ्रुत्वृत्ति कर्म्मत्वमित्यवान्तर बोधः ।

---

तावच्छेदक फलशालित्वं तत्तद्धात्वर्थं कर्म्मत्वं नातो गम्यादिकर्म्मत्वस्य पूर्वदेशादौ प्रसंगः, नवास्पन्दैः सकर्म्मकत्वं तत् फलस्य धात्वर्थता नवच्छेदकत्वात्। एवंच्च चैत्रो ग्रामं गच्छतीत्यादौ वृत्तित्वं द्वितीयार्थः, नच वृत्तित्वस्य द्वितीयार्थत्वे कर्म्मणि द्वितीयेत्यनुशासन विरोधः । तस्य कर्म्मणि फलनिष्ठाधेयत्वान्वयिनि प्रकृति तात्पर्य्ये तदुत्तरं द्वितीयेतत्रार्थकत्वात् अत्र प्रकृत्यर्थं ग्रामादे र्निरूपितत्वं संसर्गः संयोगावच्छिन्न स्पन्दो गमेरर्थः तदेकदेश संयोग रूप फले द्वितीयार्थं वृत्तित्वस्याश्रत्वं संसर्ग स्तथाच ग्राम निरूपित - वृत्तित्वाश्रय संयोगावच्छिन्न स्पन्दानुकूल कृतत्राश्रय श्चैत्र इति बोधः । चैत्रेण ग्रामो गम्यत इत्यादौ जन्यत्व संसर्गेण तादृश धात्वर्थान्वयि संयोगादिरूप फलमाख्यातार्थं स्तथाच चैत्र वृत्ति कृति जन्यो यः संयोगावच्छिन्न स्पन्दस्तज्जन्य संयोगवान् ग्राम इति बोध इतत्राहुः। खंडशक्ति वादिनस्तु फले व्यापारे च धातोः खण्डशः शक्तिद्वयं विशिष्टलाभो ऽन्वयबलात् कर्म्माख्यात

समभिव्याहारस्थले जनकत्व संसर्गेण फलविशेषित व्यापारबोधः । कर्म्माख्यात समभिव्याहारस्थले जन्यता सम्बन्धेन व्यापारविशेषित फलस्य बोधः । चैत्रो ग्रामं गच्छतीत्यादौ फलान्वितमाधेयत्वं द्वितीयार्थः संसर्गस्तु नव्यमतवत् । तथाच ग्राम निरूपित वृत्तित्वाश्रय संयोगजनक स्पन्दानुकूल कृतिमांश्चैत्र इतिबोधः । ग्रामो गम्यते चैत्रेणेत्यादौ आश्रयत्व कर्म्माख्यातार्थः तत्रव्यापारान्वित फलस्य निरूपितत्वं संसर्ग स्तथाच चैत्र वृत्ति कृतिजन्य स्पन्दजन्य संयोग निरूपिताश्रयतावान् ग्राम इतिबोधः । नातः फलस्य द्विधा भानमित्याहुः । अथ नव्यमते कर्म्मा ख्यातस्थले व्युत्पत्ति वैचित्र्यात् फलव्यापारयो र्विशेष्यविशेषणता वैपरीत्ये नान्वयः । अतो न फलस्य द्विधा भानमिति चेन्न यादृश विशेष्य विशेषणभावा पन्नयोः पदश्यता तादृश विशेष्यविशेषणभावेनान्वय इति नियमात् । कर्म्माख्यात स्थले नव्यानां धातोः खण्डशक्ति सुपागस्य द्विधाभानवारणेतु खण्डशक्तिरेव सम्यक् किं विशिष्टशक्त्या । इत्यधिकं शाब्दबोधप्रकारे तदुपयुक्तमुक्तं ॥

पचधातुना पाको (२०) पस्थितिः। तत्रा-नुकूलता संसर्गेण तादृश कर्म्मत्वान्वयः। तेन तण्डुल वृत्ति कर्म्मतानुकूल पाक इतिबोधः। तत आख्यातेन कृत्युपस्थितिः तत्रानुकूलता संसर्गेण तादृश पाकान्वयः। तेन तण्डुल वृत्ति कर्म्मतानुकूल पाकानुकूल (२१) कृतिरितिबोधः ततश्चैत्र पदेन चैत्रोपस्थितिः तत्राश्रयत्व संसर्गेण तादृशकृतेरन्वयः। तेन तण्डुलवृत्ति कर्म्मतानुकूल पाकानुकूल कृत्याश्रयश्चैत्र इति महावाक्यार्थबोधः।

वाक्यार्थएव तात्पर्य्यार्थः। वक्ता शाब्दीय तात्पर्य्यार्थ रूप वाक्यार्थमवगत्य (२२) पश्चात् शब्दः प्रयुज्यते। सर्वत्र प्रथमान्त

---

(२०)—पाक इति। विक्लृत्त्यनुकूल व्यापारः। सचाधःसन्तापनजन्य तण्डुलनिष्ठ क्रियारूप इति।

(२१)—पाकानुकूल इति। अत्रानुकूलत्वं प्रयोजकत्वं नतु जनकत्वं। तेन आख्यातार्थ कृतौ तण्डुलनिष्ठ धात्वर्थस्या सामानाधिकरण्येपि नक्षति.।

(२२)—अवगत्येति। त्यवर्थः प्रयोज्यत्वं

पदोपस्थाप्य पदार्थस्यैव शाब्दबोधे मुख्य-विशेष्यत्वं (२३)। प्रथमा विभक्तिस्तु साधुत्वार्था। एवं चैत्रेण पच्यते तण्डुल इत्यादौ चैत्रपदेन चैत्रोपस्थितिः तृतीयया कृत्युपस्थितिः वृत्तित्वं संसर्गस्तेन चैत्रवृत्ति कृतिरिति बोध। ततः पचधातुना पाकोपस्थितिः जन्यतासंसर्गः तेन चैत्रवृत्ति कृतिजन्यः पाक इतिबोधः। ततः कर्माख्यातेन फलोपस्थितिः जन्यत्वं संसर्गस्तेन तादृश पाकजन्य फलमिति बोधः। तण्डुल पदेन तण्डुलपदार्थोपस्थितिः तन्नाश्रयत्व संसर्गेण तादृश फलान्वयस्तेन चैत्रवृत्ति कृतिजन्य पाकजन्य फलशाली तण्डुल इति महावाक्यार्थबोधः। चैत्रनिष्ठ कृतेस्तृतीयोपस्थाप्यत्वादिति। एवं घटमानयति चैत्र इत्यत्र घटपदेन घटोपस्थितिः द्वितीयया कर्मत्वोपस्थितिः वृत्तित्वं संसर्गस्तेन

---

(२३)—मुख्यविशेष्यत्वमिति। अत्र मुख्यत्वं प्रकारतानात्मकत्वं।

घटवृत्ति कर्म्मत्व मितिबोधः ततः आङ्पूर्व नीधातुना आनयनो ( २४ ) पस्थितिः अनुकूलता संसर्गस्तेन घटवृत्ति कर्म्मत्वानुकूल मानयनमिति बोधः। ततः आख्यातेन कृत्युपस्थिति रनुकूलतासंसर्गेण तादृशानयनस्य कृतावन्वयस्तेन तादृशानयनानुकूलकृतिरितिबोध स्ततश्चैत्र पदेन चैत्रोपस्थितिस्तत्राश्रयत्व संसर्गेण तादृशकृतेरन्वयस्तेन घटवृत्ति कर्म्मतानुकूलानयनानुकूल कृतिमांश्चैत्र इति महावाक्यार्थबोधः। एवं करोतीत्यत्र कृधातुना कृत्युपस्थितिः आख्यातेन लक्षणया चाश्रयत्वोपस्थिति स्तत्राश्रयत्व संसर्गेण कृत्याश्रयत्वाश्रय इति शाब्दबोधः। एवं इष्टि यजते जानाति

( २४ )—आनयनेति। समीपदेश संयोगानुकूल व्यापारानुकूल व्यापारः। यत्तु अभिमत देशवृत्ति संयोगानुकूल व्यापारानुकूल व्यापार आनयनमिति। तन्न दूरदेश नयनतात्पर्य्येऽपि तादृश प्रयोगापत्तेः।

च्छतीत्यादौ बोध्यम् । एवं रथोगच्छ-तीत्यत्र गमधातुना उत्तरदेश संयोगानुकूल व्यापारोपस्थितिः । आख्यातेनलक्षणया आश्रयत्वोपस्थितिस्तदुपरि आश्रयत्वं सं-सर्गस्तेन उत्तरदेश संयोगानुकूल व्यापा-राश्रयत्वाश्रयो रथ इतिबोधः । त्यजतीत्यत्र त्यजधातुना पूर्वदेश विभागानुकूल क्रियो-पस्थितिः । आख्यातेन शक्त्या कृत्युपस्थिति स्तत्रानुकूलता संसर्गेण तादृशक्रियान्वयः तत आश्रयत्वं संसर्ग स्तेन पूर्वदेश विभा-गानुकूल क्रियानुकूल कृत्याश्रय इतिबोध.। एवं पततीत्यत्र पतधातुना अधःसंयोगानु-कूल क्रियोपस्थितिः आख्यातेन कृत्युप-स्थितिः आश्रयत्व संसर्गस्तेनाध. संयोगा-नुकूल क्रियानुकूल कृत्याश्रय इति । एवं नश्यतीत्यत्र नशधातुना नाशोपस्थितिः आख्यातेन लक्षणया प्रतियोगित्वोपस्थि-तिः आश्रयत्वं संसर्गस्तेन नाशप्रतियोगि-त्वाश्रयो घट इतिबोधः एवं विद्यत इत्यत्र विदधातुना सत्वोपस्थितिः आख्यातेन

लक्षणयाचाश्रयत्वोपस्थितिः आश्रयत्वं संसर्गस्तेनं सत्वाश्रयत्वाश्रय इतिबोधः। एवंनिद्रातीत्यादौ निपूर्वं द्राधातुना मेध्यामनः संयोगोपस्थितिः आख्यातेन कृत्युपस्थितिः आश्रयत्वं संसर्गस्तेन मेध्यामनः संयोगानुकूल कृत्याश्रय इतिधीः। एवं चैत्रो मैत्रं तण्डुलं पाचयती (२५) त्यादौ मैत्रपदोत्तर द्वितीयया वृत्तित्वं

---

(२५)—चैत्रो मैत्रं तण्डुलं पाचयतीति। वस्तुतो यत्नानुकूलव्यापारो णिजर्थस्तत्र यद्धातूत्तरं कर्त्तृ विहिताख्यातेन यादृशं कर्त्तृत्वं बोध्यते ण्यन्त तद्धातुसमभिव्याहृत कर्मप्रतययेन तादृशं कर्त्तृत्वं बोध्यते। तथाच चैत्रो मैत्रं तण्डुलं पाचयतीत्यादौ तण्डुलकर्मताक् मैत्रकर्त्तृक् पाकानुकूल व्यापार कर्त्ता चैत्र इतिबोधः। एवं चैत्रेण मैत्रस्तण्डुलं पाच्यत इत्यादौ चैत्रकर्त्तृक व्यापारजन्यो यस्तण्डुल कर्मताक् पाक स्तदनुकूल कृत्याश्रयो मैत्र इति बोधः। नच यक्समभिव्याहृताख्यातोपस्थाप्य कर्त्तृत्वस्यान्वयबोधोपगमे पच्यते चैत्र इत्यादितोऽपि

तण्डुलपदोत्तर द्वितीयया फलं णिजन्त पचधातुना पाकानुकूल व्यापारोऽर्थः आख्यातेन तदनुकूल व्यापारोबोध्यः तदुपरि आश्रयत्वं संसर्गस्तेन तण्डुलवृत्ति कर्मत्वानुकूल पाकानुकूल मैत्रवृत्ति व्यापारानुकूल व्यापारवांश्चैत्र इतिबोधः। एवं यदा चैत्रो मैत्रेण तण्डुलं पाचयतीति प्रयोगस्तत्रापि पूर्ववदन्वयबोधः। मैत्रस्य व्यापारापेक्षया कर्तृत्वं चैत्रव्यापारापेक्षया कर्मत्वंच, अतो द्वितीया तृतीययो वैकल्पिकत्वमिति बोध्यं। एवं चैत्रेण मैत्रस्तण्डुलं पाच्यत इत्यत्र चैत्रवृत्ति योव्यापारस्तज्जन्यो यस्तण्डुलवृत्ति कर्मतानुकूल पाकानुकूल व्यापारस्तदाश्रयो मैत्र इतिबोधः। वृत्तित्वं संसर्गः। तृतीयया व्यापारो बोध्यते। पाचिधातुना पाकानुकूल व्यापा-

---

पाककर्त्ता चैत्र इत्यन्वयबोधप्रसंग इतिवाच्यं, एयन्तां तर यक्समभिव्याहृतस्यैवाख्यातस्य कर्त्तृत्वान्वय बोध नियामकत्वादिति।

रा बोध्यते कर्म्माख्यातेनाश्रयत्वं द्वितीयया कर्म्मत्वं चबोध्यते एवं पिपठिषतीत्यत्र पठ धातुना पाठोपस्थितिः (२६)। सन्प्रत्ययेने च्छोपस्थितिः ( २७ ) विषयता संसर्गः। आख्यातेन लक्षणया आश्रयत्वोपस्थिति स्तदुपरि पुनराश्रयत्वं संसर्गस्तेन पाठ विषयके ( २८ ) च्छाश्रयत्वाश्रय इतिधीः। एवं देवदत्तेन शास्त्रं पिपठिष्यत इत्यत्र देवदत्तवृत्ति इच्छाविषय पाठजन्य फल-शाली शास्त्रमितिबोधः।

अथ कर्त्तृविहित क्तप्रत्ययस्य(२९)क्तत्या-श्रये शक्तिः तेन अन्नस्य पक्तेत्यत्र षष्ठ्याः

---

( २६ )—पाठोपस्थितिरिति । पाठस्तदनुकूल कण्ठाद्यभिघातादिः।

( २७ )—इच्छोपस्थितिरिति । सामानाधिकरण्येत्यादिः।

( २८ )—पाठ विषयकेति । पाठ समानाधिकरणीति शेषः। एवमग्रेऽपि।

( २९ )—कर्त्तृविहित क्तप्रत्ययस्येति । कर्त्तृ-

कर्मत्वं द्वितीया प्रतिरूपत्वात् पचधातुना पाकः तथा कृत्याश्रयो बोध्यते । अभेदः संसर्गस्तेन अन्नकर्मक पाकानुकूल कृत्याश्रयाभिन्नश्चैत्र इतिशाब्दधीः । एवं अन्नस्य पाचक इत्यत्रापि वुन् प्रत्ययेन कृत्याश्रयो बोध्यते ।

अथ भावकर्मविहित कृत्प्रत्ययस्य भावकर्मणी अर्थ तेन चैत्रेण पक्वमन्नमित्यत्र चैत्रपदोत्तर तृतीयया कृत्युपस्थितिः, वृत्तित्वं संसर्गः, पचधातुना पाकोपस्थितिः, जन्यत्वं संसर्गः, निष्ठया फलशालित्वोपस्थितिः, अभेदः संसर्गस्तेन चैत्रवृत्ति कृतिजन्य पाकजन्य फलशाल्यभिन्न मन्नमित्यर्थः । भावस्थलेतु चैत्रेणपक्वमित्यत्र चैत्रवृत्ति कृतिजन्यः पाक इतिधीः । भाव कृद् घञादीनां प्रयोगसाधुतामात्रं द्विव-

---

विहित कृत्प्रत्ययस्य कृतिवाचकत्वे नामार्थयोर्भेद सम्बन्धेनान्वयस्याव्युत्पन्नतया कृत्प्रत्ययान्तार्थस्य च नामार्थतया चैत्रः पक्तेत्यादावन्वयबोधासम्भव

धनादिमान्तु क्वचिदिति भावो द्रव्यवत् प्रकाशते इति न्यायादिति। एधानाहर्त्तु व्रजतीत्यत्र, एधपदेन काष्ठोपस्थितिः द्वितीयया कर्म्मत्वोपस्थितिः। आङ्पूर्व हृधातुना आहरणोपस्थितिः। तुमप्रत्ययेन उद्देश्यत्वोपस्थितिः व्रजधातुना गमनोपस्थितिः आख्यातेन कृत्युपस्थितिः आश्रयत्वं संसर्गस्तेन एधवृत्ति कर्म्मतानुकूल आहरणोद्देश्यक व्रजनानुकूल कृत्याश्रय इतिशाब्दधीः॥

## अथ द्विकर्म्मक विचारः।

अजा ग्रामं नयती (३०) त्यत्र अजावृत्ति

---

इत्यतआह कृत्याश्रय इति। तथाच कृतित्वविशिष्टे शक्यतावच्छेदक गौरवं फलमुखत्वेन न दोषायेतिभावः।

(३०)—अजा ग्रामं नयतीति। नीधातुना संयोगानुकूल व्यापारानुकूल व्यापारोपस्थितिः तेन ग्राम वृत्ति संयोगानुकूल अजावृत्ति क्रियानुकूल व्यापारानुकूल कृतिमानित्यन्वयबोधः।

कर्म्मतानुकूला या ग्रामविषयिणी प्राप्तिस्त-द्नुकूल कृत्याश्रयं इतिबोधः। एवं नीयते ग्राम ( २१ ) मजा पथिकेन इत्यत्र पथिक-निष्ठ कृतिजन्या या ग्रामविषयिणी प्राप्ति-स्तज्जन्य फलशालिन्यजेति शाब्दधीः। एवं

---

( २१ )—नीयते ग्राममिति। संयोगावच्छिन्न क्रिया रूप फलं कर्म्माख्यातार्थं स्तत्र धात्वर्थस्य संयोगा-वच्छिन्न क्रियानुकूल व्यापारस्य जन्यतासम्बन्धे नान्वयः। तस्यचाश्रयत्व सम्बन्धेन अजारूप प्रधान कर्म्मण्यन्वयः ग्रामादिवृत्तित्वस्यान्वयस्तु संयोग एव। एवं च पथिकनिष्ठ कृतिजन्य ग्रामनिष्ठ संयोगा-वच्छिन्न क्रियानुकूल व्यापारस्तज्जन्या या संयोगानु-कूल क्रिया तद्वती अजेत्यन्वय बोधः। फल व्यापार-योः पृथक् शक्तिमते चाश्रयत्वमात्मनेपदार्थः संयोगा वच्छिन्न क्रियारूपो धात्वर्थः व्यापाररूपापर धात्वर्थ विशेष्य तया आश्रयत्वविशेषणतया चान्वेति तदेक-देश संयोग एव ग्रामवृत्तित्वान्वयः। तथाच पथि-कीय कृतिजन्य ग्रामवृत्ति संयोगानुकूल क्रियाश्रय-त्ववती अजेतिबोधः।

गां ( २२ ) दोग्धि पयो गोपालक इत्यत्र गोसम्बन्धि-पयोवृत्ति कर्म्मतानुकूल दोहनानुकूल कृतिमानित्यन्वयधीः। एवं दुह्यते गौः क्षीरं ( २३ ) गोपालकेन इत्यत्र गोपालकनिष्ठ कृतिजन्यक्षीरविषयक दोहननिमित्त' गौरित्यन्वयः। एवं प्रकृतेः कर्म्माख्यातेनाप्रधान कर्म्मणो गवादे र्बोधजनना-

---

( २२ )—गामिति। विभागावच्छिन्न क्षरणानुकूल व्यापारो दुह्यर्थः। तथाच गोवृत्ति विभागानुकूल पयोवृत्ति क्षरणानुकूल व्यापारकर्त्ता गोप इतिबोधः। केचित्तु यत्र क्षरणानुकूल व्यापारमात्रं धात्वर्थः क्षरणान्वयि विभागश्च विभक्त्यर्थ स्तत्रापादानत्व बोधिका पञ्चमी एतेन कदाचित् गां दोग्धि कदाचित् गोभ्यो दोग्धि इत्यत्र नानियम इत्याहुः।

( २३ )—दुह्यते गौः क्षीरमिति। क्षरणजन्यविभागः कर्म्माख्यातार्थः। तेन विभागावच्छिन्न क्षीरनिष्ठ क्षरणानुकूल व्यापारजन्य क्षरणजन्य विभागाश्रयो गौरितिबोधः। खण्डशक्तिमतेतु स्वयमुह्यं।

दित्यकथित कर्म्मेत्युक्तं ( २४ )। कर्म्मत्वा-तिदेशस्तु द्वितीयालाभार्थो, नतु साक्षात् कर्म्मत्वं। एवं चैत्रस्य पाकोऽद्भुतः, समुद्रस्य बन्धो वानरैरित्यादौ चैत्रनिष्ठ कृतिजन्यः पाकः। एवं वानरीय कृतिजन्य समुद्र विषयक बन्धनमद्भुतमितिबोधः। क्वचित् षष्ठ्या तृतीया प्रतिनिधित्वात् कृतिरर्थः क्वचित् द्वितीया प्रतिनिधित्वात् कर्म्मत्व-मर्थं एवं अधीती व्याकरणे पठिती तन्त्रे इत्यादौ व्याकरण मधीतवान् तन्त्रं पठित-वानित्याद्यन्वयधीः। क्तस्येन विषयस्य कर्म्मणीत्यनेन सप्तम्या द्वितीया प्रतिनिधि त्वात्। एव "चर्म्मणि द्वीपिनं हन्ति दन्त-योर्हन्ति कुञ्जरं। केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः"॥ इत्यादौ निमित्तात्

---

( २४ )—अकथितंकर्म्म इति। गवादिनिष्ठं धात्वर्थ-तावच्छेदक फलशालित्वादन्यदेव कर्म्मत्वं बोधयति अकथितचेतिसूत्रेणापादानत्वादिभिन्न धातुप्रति-पाद्यान्वयिधर्म्मावच्छिन्न स्यापि कर्म्मसंज्ञा विधानात्

कर्म्मसंयोगे इति निमित्तसप्तमी, निमित्ता-दुद्देश्यात्तद्वाचकपदादित्यर्थः । तथाच नि-मित्तकर्म्मणो रवयवावयवित्वसम्बन्धश्चेत्तदा निमित्तवाचका पदात् सप्तमी, तेन चर्म्मो-द्देश्यक यत् द्वीपिकर्म्मक: हननं तदनुकूल कृतिमानित्यन्वय:, एवमन्यत्रापि बोध्यं । पुष्कलको गन्धमृगः, सीम्नि अण्डकोषे, सति सप्तम्या: सामानाधिकरण्यमर्थः । क्वचित् कालिकं क्वचिद्दैशिकं च । यथा गोषु दुह्यमानास्वागत:, दुग्धास्वागत इत्यादौ समानकालीनत्वं भासते । तेन गोविषयक वर्त्तमान दोहनसमानकालीन वर्त्तमान गमनानुकूल कृतिमान्, एवं गो विषयकातीत दोहन समानकालीनातीत

---

इत्याह अकथितमिति । नच गवादिनिष्ठ कर्म्मत्वस्य विभागरूपस्य धात्वर्थतावच्छेदक त्वान्नाकथितत्त्व-त्वस्य विषय इतिवाच्यं धात्वर्थतावच्छेदकत्वस्य धातुवृत्ति ग्रहविशेष्यांशे ( प्रकारांशे ) साक्षात् प्रका-रत्व रूपत्वादिति ।

गमनानुकूल कृतिमानित्यन्वयः । दैशिकं यथा द्रव्यं गुणकर्म्मान्यत्वे सति सत्वादित्यादौ, सत्वानिष्ठं गुणकर्म्मणोर्भेद समान देशत्वं भाषते । तेन गुणकर्म्म प्रतियोगिको यो भेदस्तस्य समान देशासत्त्येति( ३५ ) बोधः । द्रव्ये भेदसत्वयो र्हि दैशिक सामानाधिकरण्यादिति । पितृव्यघाती पुत्रोजनिता, एवं "यतोवनं श्वो भवितेति रामः" इत्यादौ पितृव्यं हतवानित्यर्थे पितृव्यघाती, जनिष्यतीत्यर्थे जनितेति । कथं भविष्यदुत्पत्तिक पुत्रे पितृव्यकर्म्मकातीत हनन कर्त्तृत्व सम्बन्धोऽसम्भवात् । एवमन्यत्राप्य सम्भव इति, "धातुसम्बन्धे प्रत्ययाः" सूत्रकरणं, तस्यायमर्थः धात्वर्थस्यावच्छेक सम्बन्धे तद्धात्वर्थं समभिव्याहृत क्रियान्तर भिन्नकालीन प्रत्ययाः साधवः

( ३५ )—समानदेशासत्त्येति । समानाधिकरणासत्त्यर्थः, देशपदं दैशिक सामानाधिकरण्यबोधाय ।

स्यु: । वोधेतु यथोचित कालमादायैव विषयी भवति । तेन भविष्यदुत्पत्तिक पुत्रे यद्यवश्यं पितृव्यकर्म्मक हननं भाषते तदैवायं प्रयोगः साधुः । तेनातीतकाल-विहित प्रत्ययेनावश्यकत्वं भाषते तेन भवि-ष्यदुत्पत्तिक पुत्रोऽवश्यं पितृव्यं हनिष्य-तीतिवोधः । एवं परदिनोत्पत्ति प्रति, योगी रामोऽवश्यं वनं गमिष्यतीति बोधः ॥

---

अथ कारक विचारः ।

तत्र क्रियानिमित्तत्वं कारकत्वमिति(२६) वैयाकरणाः । तत्र मैत्रस्य तण्डुलं पचती-

---

( २६ )—कारकत्वमिति । क्रिया धात्वर्थस्तन्नि-मित्तत्वं तत्प्रयोजकत्वं, तच्च साक्षात् परम्परया साधारणं । ग्रामं गच्छतीत्यादौ संयोगावच्छिन्न क्रिया गमेरर्थस्तत्र विशेषणीभूत संयोगांशे निमि-त्तत्वेन ग्रामस्य कर्म्मत्वं, नचैवं संयोगनिमित्तत्वं क्रियाया अप्यस्तीति तस्यापि कारकत्वापत्तिरिति वाच्यं, क्रियान्यत्वे सतीति विशेषणात् । आख्या-

त्यादौ सम्बन्धिनि मैत्रे कारकत्वापत्तिः। सम्प्रदानादेरनुमति प्रकाशन द्वारेव (२७) तण्डुल सम्पादन द्वारापि पाक निमित्त-त्वात्। विभक्त्यर्थं द्वारा क्रियान्वयित्व (२८) कारकत्वमिति नैयायिकाः। अतएव नामार्थं धात्वर्थयोर्भेदेन साक्षादन्वयस्या व्युत्पन्नत्वात्। तद्द्वारीभूत विभक्त्यर्थोप-

---

णाय गां ददातीत्यत्र सम्प्रदानादेरनुमति प्रकाशन द्वारा क्रिया प्रयोजकत्वमिति तत्र लक्षण समन्वयः।

(२७)—अनुमति प्रकाशनद्वारेति। अनुमति-रिच्छा तत् प्रकाशनं तद्ज्ञापनं, ब्राह्मणाय गां ददातीत्यत्र तुभ्यमहं ददामीत्याद्युक्तौ ब्राह्मणो ददस्व इत्युक्ते तेन शब्देन सम्प्रदानस्येच्छामनुमाय त्यागात्मकेच्छावान् भवतीत्यनुमति प्रकाशनस्य त्यागनिमित्तता।

(२८)—क्रियान्वयित्वमिति। धान्येन धनवा-मित्यादौ अभेदरूप विभक्त्यर्थं द्वारा नामार्थान्वयिनी धान्या देर्वारणाय क्रियेति। नैयायिक लक्षणं मुख्य भाक्त साधारणं।

स्थिते स्वन्वत्वं कल्प्यं । विभक्तिस्तु क्वचित् सुपात्मिका, क्वचित् तिङात्मिकाचं इति-शेषः । स्तोकं पचतीत्यादौ क्रियाविशेषणेऽतिप्रसंगवारणाय विभक्त्यर्थद्वारेति (३९) । तत्रहि द्वितीया साधुत्वार्था । सम्बन्धिनः क्रियानिमित्तत्वेपि न क्रियान्वयित्वं अतो नातिव्याप्तिः । "गुरु विप्र तपस्वि दुर्गतानां प्रतिकुर्वीत (४०) भिषक् स्वभेषजै" रित्यादौतु नामाध्याहारः कर्त्तव्योऽतो-नातिव्याप्तिः ॥

## अथ कर्त्तृलक्षणं ।

क्रियानुकूल कृतिमत्वं कर्त्तृत्वं । यत्नार्थक

---

(३९)—विभक्त्यर्थद्वारेति । विशेषण विभक्ति-र्निरर्थकत्वमतेनेदं । विशेषणविभक्तेरभेदार्थकत्व मते तु अभेदातिरिक्तत्वं विभक्त्यर्थे विशेषणं देयमिति ।

(४०)—प्रतिकुर्वीतेति । रोगनाशानुकूल व्यापारः प्रतीकारः ।

हजन्म क्रधातु व्युत्पन्नत्वात्। अतोऽन्यत्रा चेतनादौ कर्त्तृत्वं भाक्तमिति॥

अथ क्रियालक्षणं।

धातोरर्थः क्रिया, साच द्विधा, क्वचित् कर्त्तृस्था, क्वचित् कर्म्मस्था । तत्र गमि पति प्रभृतीनां कर्त्तृस्थैवक्रिया, तस्याः पञ्चविध कर्म्माख्यतमरूपत्वात्। पचि भिदि प्रभृतीनां कर्म्मस्थैव, क्वचिद्धःसन्तापनादि रूपत्वात् क्वचिदवयव विभाग रूपत्वादिति संक्षेपः॥

अथ कर्म्म लक्षणं।

परसमवेत (४१) क्रियाजन्य फलशालित्वं कर्म्मत्वं। परसमवेतो यो धात्वर्थस्तज्जन्य यत् फल, तद्वत्वमित्यर्थः । परसमवेतेति विशेषणात् ग्रामं गच्छतीत्यादौ संयोग रूप फलशालित्वेपि कर्त्तरि नातिव्याप्तिः।

---

(४१)—ग्रामं गच्छतीतिवत् स्वं गच्छतीति प्रयोग वारणाय परसमवेतेति। नन्वत्र परत्वं किं प्रकृत्यर्थ प्रतियोगिक भेदवत्वं, प्रकृत्यर्थतावच्छेदका-

वच्छिन्न प्रतियोगिताक् भेदवत्वं, उत तत्तद्व्यक्ति त्वावच्छिन्न प्रतियोगिताक् भेदवत्वं वा । नाद्यः, ग्रामं गच्छतीतिवत् स्वं गच्छतीति प्रयोगापत्तेः, स्वस्मिन्नपि द्वित्वावच्छिन्न भेदसत्वात् । नद्वितीयः, विहगो द्रव्यं गच्छतीति वाक्यस्यायोग्यत्वापत्तेः, द्रव्यत्वावच्छिन्न प्रतियोगिताक् भेदसमानाधिकरण क्रियायाः अप्रसिद्धत्वात् । नान्त्यः, तद्व्यक्तित्वाद्यनुपस्थितौ शाब्दबोधानुपपत्तेरितिचेत्, प्रकृत्यर्थनिष्ठ भेदप्रतियोगित्वमेव परत्वं, समवेतत्वञ्च तादृश परत्वनिरूपित समवाय सम्बन्धावच्छिन्नावच्छेदकत्वं, तथाच ग्रामं गच्छतीत्यत्र द्वितीयार्थः संयोगी भेदश्च, भेदस्य प्रतियोगितावच्छेदकत्व सम्बन्धेन संयोगस्य जनकता सम्बन्धेन क्रियायामन्वयः आधेयता सम्बन्धेन भेदे संयोगे च ग्रामादेरन्वयः, एवञ्च ग्रामविशिष्टो योभेदः प्रतियोगितावच्छेदकतासम्बन्धेन तद्विशिष्टत्वेसति ग्रामविशिष्टोयः संयोगस्तद्विशिष्टा या क्रिया तदनुकूल कृतिमानिति शाब्दधीः । व्युत्पत्तिवैचित्र्येण योग्यतावत्तौ लभ्यत इति न कोपि दोष इति ।

अतएव (४२) फलावच्छिन्न व्यापारबोधकत्वाद्धातोः सकर्म्मकत्व व्यवहारः। गच्छतीत्यादौत्तरदेश संयोग फलिका क्रिया गमनं धात्वर्थः। गां ददातीत्यत्र स्वस्वत्व ध्वंसपूर्वक परस्वत्वोत् पत्यवच्छिन्न त्यागो दानं धात्वर्थः तज्जन्यं फलं स्वस्वत्व ध्वंस पूर्वक परकीय स्वत्वं तच्छालित्वात् गोः कर्म्मत्वं। तण्डुलं पचतीत्यादावधः सन्तापनजन्य विक्लित्ति फलं तच्छालित्वात्तण्डुलादेः कर्म्मत्वं। अतएव यत्र क्रिया कर्त्तृगता तत्र मुख्यं, यत्र कर्म्मगता तत्र गौणं। एवं ओदनं पचतीत्यादावोदनपदेन तण्डुले लक्षणा, विक्लित्ति फलयोगात्।

---

(४२)—अतएवेति, फलावच्छिन्नेति। क्रियाजन्य फलशालिनः कर्म्मत्वादेव। आश्रयानवच्छिन्नत्वं फलस्य विशेषणं देयं, तेन वह्नौ घृतं जुहोतीत्यत्र अग्निसंयोगावच्छिन्न क्रियानुकूल व्यापारस्य हुधात्वर्थतया धात्वर्थतावच्छेदकीभूत संयोगरूप फलवत्वेऽपि नाग्नेः कर्म्मत्वापत्तिः, तन्निष्ठ संयोग-

तच्च कर्म्म त्रिविधं, प्राप्यं, निर्वर्त्त्यं, विकार्य्यं चेति। यत्र कर्म्मणि धात्वर्थजन्य फलवत्त्वं तत् प्राप्यं। यथा गच्छति पश्यति हन्तीत्यादयः। यत्र तु साध्यत्वेन विषयत्वरूप कर्म्मत्वं तन्निर्वर्त्त्यं, यथा घटङ्करोतीत्या-

---

स्याश्रयानवच्छिन्नावच्छेदकत्व विरहादिति। नच धातुजन्योपस्थित मुख्यविशेष्यांशे साक्षात् प्रकारत्वं कर्म्मत्वं नतुविशेषणांशे इति नैष दोष इतिवाच्यं। अजां ग्रामं नयतीत्यादौ संयोगावच्छिन्न क्रियानुकूल व्यापारादिरूपे धात्वर्थे संयोगादेः साक्षात् प्रकारत्वाभावेन तदाश्रयस्य ग्रामादेः कर्म्मत्वानुपपत्त्या नीवहादेर्द्विकर्म्मकत्व व्याघातादिति। ननु अग्नौ घृतं जुहोतीति वाक्यस्यायोग्यत्वापत्तिः, धात्वर्थतावच्छेदकीभूत अग्निवृत्ति संयोगधर्म्मिक सप्तम्यन्तार्थ अग्निवृत्तित्व बोधने उद्देश्यतावच्छेदक विधेययोरैक्येन शाब्दबोधानुपगमादितिचेन्न। उद्देश्यांशे आधेयता सम्बन्धेनैवाग्नेरवच्छेदकत्वं सप्तम्यर्थ आधेयत्वस्य विधेयतया भानात् उद्देश्यतावच्छेदक विधेययोरैक्यानवकाशात्। वस्तुत स्तथा

दयः। एवं घटङ्करोतीत्यादौ सर्वत्र घटादि पदे मृत्पिण्डादौ लक्षणा साक्षात् कृत्यादि विषयानुरोधात्। एवं इच्छति द्वेष्टि यजती (४२) त्यादीनां। यत्रतु प्रकृत्यु-च्छेद जनित रूपान्तरवत्त्वं तद्विकार्य्यं। यथा काष्ठं भस्म करोति, दुग्धं दधि करोति, तण्डुलानोदनं पचति, सुवर्णं कुण्डलं करोतीत्यादयः। अत्र भस्मादेः कर्म्मत्वं न काष्ठादेः भस्मादिषु काष्ठादि सम्बन्धभिन्यत्व बोधनाय भस्मादि पद समनियत विभक्तिमत्वं काष्ठादेः तथाच काष्ठसम्बन्धाभिन्न भस्म विषयक कृत्याश्रय

---

योग्यत्वेऽपि नक्षतिः व्युत्पन्नानां तादृश प्रयोग-स्याप्रामाणिकत्वात् किन्तु संस्कृतेवक्रौ जुहुयादि-तारादावेव, तत्रच विधेयांशेऽधिकावगाहनान्नास्तेत्र-वानुपपत्तिः घृतादेश्वात्रयानवच्छिन्न धात्वर्थतावच्छे-दक क्रियारूप फलाश्रयत्वात् कर्म्मत्वोपपत्तिरिति।

(४२)—यजतीति। यागस्य इच्छायांपर्य्यवसा-नात्।

इतिशाब्दधीः एवमन्यत्रापि बोध्यं। किन्तु अजां ग्रामं नयतीत्यादिवन्न द्विकर्म्मकत्वं, अत्र भिन्न बोधात्। यथा अजावृत्ति कर्म्म-तानुकूला या ग्रामविषयिणी प्राप्तिस्तदनु-कूल कृतिमानित्यन्वयधीः। एवं गां दोग्धि पयो गोप इत्यादि बोधे गोसम्बन्धित्वं पयोनिष्ठं ज्ञेयं। अजाग्रामंनीयते पान्थेने त्यादौ पान्थवृत्ति कृतिजन्या या ग्रामविष-यिणी प्राप्तिस्तज्जन्य फलशालिन्यजेत्यन्वय-धीः। एवं दुह्यते गौः पयो गोपालकेनेत्या-दौ गोपालकवृत्ति कृतिजन्य-दोहनजनित फलशालिपयो निमित्तं गौरिति शाब्दधीः। एवं त्रिविध कर्म्मकारक मध्ये प्राप्यं कर्म्म मुख्यं (४४) निर्वर्त्त्यं विकार्य्यं च गौण (४५) मिति संक्षेपः॥

---

(४४)—मुख्यमिति। अस्य कारकत्वात्तादृश-फलाश्रयत्वाच्चेति भावः।

(४५)—गौणमिति। घटं करोतीत्यादौ ज्ञानः

## अथ करण लक्षणं।

तत्र "साधकतम करणमिति" सूत्रं। साधकतमञ्च कारकान्तरासहकृतत्वे सति फलहेतुत्वं। कारकान्तर व्यापार मनुत्पाद्य फलहेतुत्वं। फलञ्च धात्वर्थतावच्छेदकं परशुना छिनत्ति (४६) वृक्षमित्यादौ तृतीयायाः करणत्व मर्थः। एव मनसा पाटलिपुत्र नगरं गच्छतीति। अथ धनेन कुलं विद्यया यश इत्यादौ तृतीयाया हेतुत्वमर्थः, क्रियान्वयित्वाभावात्। एवं धूमाद्वह्निः, कृतकत्वादनित्यः, इत्यादौ पञ्चम्यर्थो हेतुता, धूमपदे धूमज्ञाने, वह्निपदे च वह्निज्ञाने लक्षणा। कृतकत्वात् कार्य्यत्वा दित्यर्थः॥

---

फलावच्छिन्न व्यापार बोधकत्वाभावात् घटादेस्तादृश फलानाश्रयत्वाच्चेति भावः।

(४६)—छिनत्तीति। आरम्भक संयोग नाशक विभागावच्छिन्न व्यापारश्छेदनमिति।

अथ सम्प्रदान लक्षणं।

"कर्म्मणायमभिप्रैति (४७) ससम्प्रदानमिति" सूत्रं। अस्यार्थः करणीभूत कर्म्मजन्य फलभागित्वेनो (४८) द्देश्यत्वं सम्प्रदानत्वमितयर्थः। दाधातोः स्वस्वत्व ध्वंस पूर्व्वक परस्वत्वोत्पत्यवच्छिन्न त्यागः। अथवा उद्देश्यगत स्वामित्व सम्पादकत्यागोऽर्थः। तेन विप्राय गां ददातीतयत्र विप्रोद्देश्यकं यत् गोवृत्ति स्वत्वं गोनिरूपित स्वामित्वं वा, तज्जनको यस्त्यागस्तदनुकूल कृतिमानित्यन्वयधीः। नारदाय रोचते कलहइतयत्र चतुर्थ्याः सम्बन्धित्वमर्थं। तत्र सूत्रं "रुच्यर्थानाम्प्रीयमाण" इति। तथा-च नारदसम्बन्धिनी या रुचिस्तद्विषयः

---

(४७) कर्म्मणायमभिप्रैतीति। कर्म्मणेति दानकर्म्मणेतयर्थः, अभिप्रैतीति स्वत्वभागित्वेनोद्देश्यं करोतीतयर्थः।

(४८)—फलभागित्वेनेति। फलं स्वत्वं, उद्देश्यत्वं दातुरिच्छाविषयत्वं स्व स्वत्व ध्वंसपूर्व्वकमिति।

कलह इति शाब्दधीः । नृपाय श्लाघते वन्दीत्यत्र, चतुर्थ्याः विषयत्वमर्थः । तत्र सूत्रं "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमान" इति ज्ञीप्स्यमानात्मज्ञापनेच्छा विषयीभूतः । तथाच नृपविषयकात्मज्ञापनेच्छावत् वन्दी-कथनाश्रय इतिधीः । एवं विप्राय शतं धारयते शूद्रइत्यत्र, चतुर्थ्यर्थो सम्बन्धित्वं "धारेरुत्तमर्ण" इतिसूत्रं। तथाच विप्रस-म्बन्धि शत सङ्ख्याविशिष्टद्रव्यकर्म्मक ऋण-ग्रहणाश्रयः शूद्र इति बोधः । देवदत्ताय क्रुध्यतीत्यत्र, चतुर्थ्याः कर्म्मत्वमर्थस्तत्र "क्रुधद्रुहेर्ष्यासूयार्थानां यम्प्रतिकोप" इति सूत्रं । तथाच देवदत्त कर्म्मक क्रोधाश्रय इतिबोध. । क्रोधश्च परविषयकासूयाजनक व्यापारः। असूया द्वेषः । पुष्पाय स्पृह-यतीत्यत्र चतुर्थ्या ईप्सितकर्म्मत्वमर्थः। तत्र "स्पृहेरीप्सित" इति सूत्रं । तथाच पुष्पविषयक स्पृहाश्रय इतिबोधः ॥

अथापादान लक्षणं। (४९)

" ध्रुवमपायेऽपादानमिति " सूत्रं ।

अपाये विभागजनकीभूत क्रियायां यत्

---

( ४९ )—अपादान लक्षणमिति । वृक्षाद्विभजते पत्रमित्यादौ विभागावधित्वमपादानत्वं, अवधित्वावधिमत्त्वे स्वरूप सम्बन्धविशेषौ। तथाच वृक्षावधिक विभागाश्रयः पत्रमिति बोधः। यद्दिच वृक्षात् स्पन्दते इत्यादयो न प्रयोगास्तदा परकीय क्रियेतयत्र सकर्म्मक धात्वर्थो विवक्षणीयः।

तदपादानं त्रिविधं। यथा—

" निर्द्दिष्टविषयं किञ्चिदुपात्तविषयं तथा ।
अपेक्षित क्रियञ्चेति त्रिधापादानमुच्यते ॥ "

इति वाक्यपदीयात् । यत्र साक्षाद्धातुना गतिरुच्यते तन्निर्द्दिष्टविषयं। यथा वृक्षात् पत्रं पतति। यत्र धात्वन्तरार्थाङ्गं स्वार्थं धातुराह तदुपात्त विषयं। यथा बलाहकाद्विद्योतते विद्युदित्यत्र, निःसरणाङ्गे विद्योतने द्युतिर्व्वर्त्तते। द्युतिश्च लक्षणया निःसरणपूर्व्वक विद्योतनबोधकः, तथाच बलाहकावधिक निःसरणोत्तर कालीन विद्योतन कर्त्री

ध्रुवं क्रियारहितं कारकं तदपादानं भवतीत्यर्थः। परकीय ( ५० ) क्रियाजन्य विभागाश्रयत्वं अपादानत्वमिति नैयायिक लक्षण। तदपादानं द्विविध, चलमचलञ्चेति। यथा वृक्षात् पत्रं पततीत्यत्र, वृक्षरूपमपादानमचलं। धावतो ऽश्वात् पतितो ऽश्ववार इतरत्राश्वरूपापादानं चल। अत्र पञ्चम्या अपादानत्वमर्थः अपादानत्वमवधित्वं। तेन वृक्षावधिकाधःसंयोगानुकूला या क्रिया तद्वत् पत्रमिति शाब्दधीः। एवं अश्वावधिकाधः संयोगानुकूला या क्रिया तद्वानश्ववारइति।

---

विद्युदिति बोधः। यत्र क्रियाध्याहारोऽपेक्षितस्तदन्यं। यथा कुतोभवानिति जिज्ञासायां पाटलिपुत्रादित्यत्र आगमनार्थमध्याहृत्यान्वयः कार्य्य इति।

( ५० )—परकीयेति। स्वनिष्ठ भेद प्रतियोगितावच्छेदकीभूत क्रियाजन्य विभागाश्रयत्वमित्यर्थः। पर्णात् पर्णं पततीति प्रयोगवारणाय भूतान्तं क्रियाविशेषण, वृक्षात् पत्रं पततीति प्रयोगादौ

नन्वत्र कथमश्वस्यापादानत्वं? पुरुषाश्वयोर्विभागं प्रति अश्वक्रियाया हेतुत्वादिति चेन्न, अश्वक्रिया नोभययोर्विभागहेतुः। किन्तु विभागजनकीभूत पुरुष क्रियां प्रति अश्वक्रियायाः हेतुत्वात्। हिमवतो गङ्गा प्रभवतीति, "वल्मीकाग्रात् प्रभवति धनुः खण्डमाखण्डलस्य" इत्यत्र पञ्चम्या अवच्छेदकत्वमर्थः। तत्र "भुवः प्रभव" इति सूत्रं। प्रभव आद्यप्रकाशः। तेन हिमवदवच्छिन्नाद्य प्रकाशोत्पत्तिमती गङ्गा, एवमन्यत्रापि बोध्यं। सामग्रीतः फलं जायत इत्यादौ पञ्चम्यर्थो हेतुता, तत्र

---

विभागे भेदप्रतियोगितावच्छेदकत्वे च पञ्चम्याः शक्तिद्वयं भेदे विभागे च प्रकृत्यर्थं वृक्षादेराधेयतयाऽन्वयः प्रतियोगितावच्छेदकत्व विभागयोराश्रयत्व जनकत्व सम्बन्धाभ्यां क्रियायामन्वयः, एवञ्च वृक्षवृत्ति भेद प्रतियोगितावच्छेदक वृक्ष वृत्ति विभागजनक पतनाश्रय पत्रमितिबोध। अत्रच भेदप्रतियोगितावच्छेदकत्व मात्रस्य पञ्चम्यर्थत्वे वृक्षाद्

"जनिकर्त्तुः प्रकृतिरिति" ( ५१ ) सूत्रं ।
प्रकृतिः फलोन्मुखी कारणकलापस्तेन
सामग्री हेतुका या उत्पत्तिस्तत्प्रति-
योगि फलमिति माध्वधी. । 'अध्ययनात्
पराजयते ( ५२ ) छात्र इत्यादौ पञ्चम्यर्थौ

---

घटस्तिष्ठतीति प्रयोगापत्तिरतो विभागोऽपि पञ्च-
म्यर्थः । एवञ्च धात्वर्थतानवच्छेदकत्वेन विभागोऽ-
पि विशेषणीयस्तेन वृक्षात्त्यजतीति न प्रयोगः ।

( ५१ )—जनिकर्त्तुः प्रकृतिरिति । प्रकृतिः प्रभव
इत्यस्य उत्पत्तिपरत्वे जनिकर्त्तुः प्रकृतिरिति सूत्र-
वैयर्थ्यमत आह आद्यप्रकाशं इति आद्य वह्निः संयोग
इत्यर्थः, स एव धात्वर्थं, वह्निः पदार्थः प्रकृते भूख-
ण्डमेव, पञ्चम्यर्थ. संयोग ध्वंसाव्यवहितोत्तरकाल-
वृत्तित्वं, आख्यातार्थ आश्रयता, तथाच हिमालय
संयोग ध्वंसाव्यवहितोत्तर क्षण वृत्त्याद्यभूसंयोगा-
श्रयत्ववती गङ्गेति बोधः । ननु प्रकृति पदस्य विका-
रि परत्वे कैकयितो भरतस्ततोऽभूदित्यादौ पञ्च-
म्यनुपपत्तिरित्यतो व्याचष्टे कारण इति ।

( ५२ )—पराजयत इति । केचित्तु अध्ययनात्

विषयता, तत्र "पराजेरसोढ़" इतिसूत्रं। पराापूर्वक जिधातुयोगे असोढ़ः अपादानं। असोढ़त्वमसाध्यत्वं, पराजयो निवृत्तिः। तेनाध्ययन विषयक निवृत्तिमां श्चैत्र इति शाब्दधीः। शत्रून् पराजयते इत्यत्र, पराजयः परिभवः। अत्र तु पराभव विषय एवातो न पञ्चमी। कूपाद(५३)न्धं वारयतीत्यत्र पञ्चम्यर्थः केवलमवधित्वं।

---

पराजयते इत्यत्राशक्यत्वज्ञानं पराजयः, पञ्चम्याः कर्मत्वमर्थः, तथाचाध्ययन विषयकाशक्यत्वज्ञानवानिति बोधः। कृष्णात् पराजयते शिशुपाल इत्यादौ अभिभवाशक्यत्वज्ञानं पराजयः, पञ्चम्याः कर्मत्वं तथाच कृष्ण विषयकाभिभवाशक्यत्व ज्ञानवानिति बोध इत्याहुः।

(५३)—कूपादिति। कूपादन्धं वारयतीत्यादौ अभावानुकूल व्यापारो धात्वर्थः पञ्चम्याः वृत्तित्वं द्वितीयायाः प्रतियोगित्वं धात्वर्थतावच्छेदकीभूताभावान्वितमर्थं अभावश्च कूपादि समभिव्याहार वशात् पतनादि सम्बन्धेन बोध्यः, तथाच

तत्र "वारणार्थानामीप्सित" इति सूत्रं। कूपोपि पुरोगमस्य देशत्वेनेप्सितो भवत्येव तेन कूपावधिकं यन्निवारणं तदनुकूल कृतिमानित्यन्वयधीः। अत्र कूपस्य न ध्रुवत्वं, अन्धकूपयोः संयोगविरहात्। अन्धत्वं, गोलकाभाववत्त्वे सति चक्षुःशून्योभयगोलकत्सामान्याभावान्यतरवत्वं। काणत्वं, चक्षुर्युक्तैक गोलक मात्रवत्वं। चौराद्बिभेति, व्याघ्राद्बिभेति, दस्युभ्योरक्षित, इत्यादौ पञ्चम्यर्थौ हेतुता। तत्र "भीत्रार्थानां (५४)भयहेतुः" इति सूत्रं। भयार्थक एवं त्राणार्थक धातुयोगे योहेतुस्तदपादानं भवतीत्यर्थः। अत्र हेतोर्यदपादानत्वं विहितं तत्तृतीया निवारणार्थमेव। उपाध्या-

---

पतन सम्बन्धेन कूपवृत्ति अन्ध प्रतियोगिकाभावानुकूल व्यापारकर्त्ता इति बोधः। यवेभ्यो गां वारयतीत्यादौ भक्षणादि सम्बन्धेनाभाव बोधः।

(५४)—भीत्रार्थानामिति। भयं भाव्यनिष्टचिन्ता, त्राणञ्चानिष्ट निवृत्त्यनुकूल व्यापारः,

यादन्तर्द्धत्ते (५५) छात्र इत्यत्रापि पञ्च-म्या हेतुत्वं तृतीया वारणार्थमेव । तत्र सूत्रं "अन्तर्धौ येनादर्शनमिच्छति" अन्तर्धातुं येन हेतुनास्यादर्शनमिच्छति तदपादानमित्यर्थः । अन्तर्द्धिरात्मसंगोपनं । तथाच उपाध्याय हेतुक यदात्मसङ्गोपनं तद्विषयिणीच्छा तदाश्रयश्छात्र इतिबोधः । उपाध्यायादधीते (५६) इत्यत्र पञ्चम्यर्थो

---

पञ्चम्या प्रयोज्यत्वमर्थः धात्वर्थघटकानिष्टेऽन्वेति, तेन व्याघ्र प्रयोज्यानिष्ट चिन्ताश्रय इति ।

(५५)—उपाध्यायादन्तर्द्धत्त इति । आत्मविषयक प्रत्यक्षविरोधि व्यापारो धात्वर्थः, पञ्चम्याः सम्बन्धित्व धात्वर्थतावच्छेदके प्रत्यक्षान्वितं, आख्यातस्य कृतिरर्थः, तथाच उपाध्याय सम्बन्धि आत्मविषयक प्रत्यक्षविरोधि व्यापारकर्त्ता इति बोधः ।

(५६)—उपाध्यायादधीत इति । उपाध्यायादधीते, पण्डितात् शृणोतीत्यादौ प्रकृत्यर्थोपाध्यायादि-कर्त्तृकोच्चारणाधीनत्वं पञ्चम्या अर्थस्तस्य च उच्चारणार्थ परत्वज्ञान श्रवणादि क्रियायामन्वयः, तथा

हेतुता। तत्र सूत्र "आख्यातोपयोगे" नियमाद्वाक्यग्रहणे आख्याताऽपादानं भवतीति। अत्रापादानत्वविधानं तृतीयावारणार्थं। आख्याता वक्ता, तथाच उपाध्यायहेतुक यन्नियमपूर्वक वाक्यग्रहणं तदनुकूल कृतिमानित्यन्वयधी:॥

अथाधिकरण लक्षणं।

तत्र पाणिनि सूत्रं "आधारोऽधिकरणं" आधारो ऽत्राश्रय:, कर्त्तृकर्म्मान्यतरद्वारा क्रियाश्रयत्वे सति तत् क्रियोपकारकत्वं अधिकरणत्वमिति नैयायिका:। अत्रोपकारकत्वं निष्पादकत्वं तेन पीठे स्थित्वा गृहे स्थाल्यामोदनं पचतीत्यत्र, सप्तम्यर्थो ऽधिकरणत्वं। अत्र कर्त्तृप्रभृतीनामतिव्याप्ति वारणाय सत्यन्तं। गेहस्तु पाकक्रियाश्रयत्वं तदुपकारकत्वञ्च कर्त्तृद्वारा, स्थाल्याश्च ओदनरूप कर्म्मद्वारा क्रियाश्र-

---

चोपाध्यायादिकर्त्तृकोच्चारणाधीन अर्थपरत्वज्ञानाश्रय इति।

यत्वं तदुपकारकत्वञ्चेतिबोध्यं, पीठस्यतु स्थितिक्रियापेक्षया एवेतिनिष्कर्षः ॥

## अथ समासवादः।

तत्र समासत्वमखण्डोपाधि विशेषः नतु कर्म्मधारयादि षड़न्यतमत्वं आत्माश्रयत्वात्। नैयायिक मतेतु समासे न शक्तिर्नवा लक्षणा, वाक्यत्वात्। शक्तिलक्षणान्यतर सम्बन्धस्तु पदनिष्ठ एव, तदर्थावगतिस्तु, (५७) क्वचित् पूर्वपदे क्वचिदुत्तर पदे क्वचिदुभय पदे वा लक्षणयेति। समास करणञ्च पदसंस्कारार्थं (५८) मेवेति ज्ञेयं। किन्तु व्यास कालीन तत्तद्वाक्यार्थ बोधानुकूल तत्तत् पदार्थोपस्थितेः क्रमप्रतिक

(५७)—तदर्थावगतिस्त्विति। समस्यमान पदार्थावगतिः कथं स्यादित्याकांक्षायामाह तदर्थावगतिस्त्विति।

(५८)—पद संस्कारइति। पदनिष्ठ संस्कारः साधुत्वं।

तस्तत् पद समूहस्यैव शक्ति लक्षणान्यतर सम्बन्धेन, समासकालेऽपि तज्जातीय-शक्याथ बोधानुकूल पदार्थोपस्थितिहेतुत्व कल्पते लाघवात् नतु वाक्यस्य पदत्वं, तत् पदस्यातिरिक्तापि शक्तिः कल्प्या गौरवात्। ननु नित्य समासस्थले पङ्कजादि पदे कागतिः। तत्र व्यासाभावेन लक्षण-शक्तिक पदाभावादितिचेन्न तत्रागत्यो-भयोः समाधान साम्यात्। तथाहि समुदाये शक्त्यनुरोधात् समुदायस्य पदत्वं, अस्माभिरवयव शक्त्यनुरोधेन पदैकदेश-स्यापि पदत्व भवद्भिः (५८) कल्पनीय। समानयो यत्रोभयोः समोदोषः परिहा-रोऽपि तत्सम इति प्रवादोपि साधु रिति॥

अथ कर्म्मधारय लक्षणं।

समान विभक्तिमत् पदप्रकृतिकत्वेसत्य-

---

(५८)—भवद्भिरिति। अवयव कल्पनीयमिति सम्बन्धः।

भेद बोधकत्वं कर्म्मधारयत्वं। तेन नीलोत्पलमित्यत्र, नीलपदेन नील गुणविशिष्ट वस्तु, उत्पल पदेन उत्पल सामान्यमुपस्थाप्यते। अभेदाख्यसंसर्गद्वारा नीलाभिन्न मुत्पलमिति शाब्दधीः। नामार्थयोरभेदान्वयबोधंप्रति विरुद्धविभक्ति (६०) राहित्यस्य कारणत्वं। एवं कर्म्मधारये न शक्तिर्नवा लक्षणेतिप्रसिद्धिः। अतएव निषादस्थपतिं याजयेदित्यत्र न षष्ठीतत्पुरुषः, नवा बहुव्रीहिः। पूर्वपदे परपदे वा लक्षणापत्तेः। तथाचात्र कर्म्मधारय समासान्निषादाभिन्न स्थपति याजनमिति बोधः। नच निषादस्य शङ्कर जातिविशेषत्वात् वेदानधिकारात् याजनासम्भव इति

---

(६०)—विरुद्धविभक्तीति। अत्रतु समानजातीयत्वाभावविशिष्टत्वं विरुद्धत्वं, साजात्यञ्च स्ववृत्ति सुव्विभाजक प्रथमात्वादि रूपेण, तेन वेदाः प्रमाणं मतं ब्राह्मणा इत्यादौ नाभेदबोधानुपपत्तिरिति ध्येयं।

वाच्यं, अपूर्वं विद्याप्रयुक्तेः स्तत्र कल्पत्वात्। विद्याप्रयुक्तिस्तु निषिद्ध कर्म्मक मन्त्र पाठमिति॥

अथ तत्पुरुष लक्षणं।

असमान विभक्तिमत् प्रतिपद प्रकृतिकत्वेसत्यभेद बोधक पदत्वं तत्पुरुषत्व। राजपुरुष इत्यत्र पूर्वपदे लक्षणया राजसम्बन्धित्वमवगम्यते, तेन राजसम्बन्धाभिन्नः पुरुष इत्यर्थः। नामार्थद्वयाभेद बोधं प्रति विरुद्ध विभक्तेरभावस्य तन्त्रत्वात् अन्यथा पुरुषपदार्थे राजपदार्थस्य साक्षादन्वयो नस्यात् (६१) निपातातिरिक्त नामार्थयो र्भेदेन साक्षादन्वयस्याव्युत्पन्नत्वात्। तथाच तादृश बोधंप्रति द्वारीभूत विभक्तेरपेक्षणीयेति बोध्यं। नच राजपुरुष इत्यत्र पुरुषपदे राजसम्बन्धिनि लक्षणा, राजपदन्तु तात्पर्य्यग्राहकमिति

(६१)—साक्षादन्वयोनस्यादिति। विभक्त्यर्थान्तरयाद्युपपन्नबोधः स्यादित्याशङ्क्याह साक्षादिति।

वाच्यं, उत्तरपदार्थ प्रधान तत्पुरुष इति-व्युत्पत्ति विरोधात्, पूर्वपदस्य च निरर्थ-कत्वात् ( ६२ ) । अतएव चन्द्र इव मुख-मित्यत्र इवार्थान्वय बोधे चन्द्र पदोत्तर षष्ठी नापेक्ष्यते, प्रथमाच साधुत्वार्था । नच दधि पश्यतीतिवत् लुप्तविभक्तिरनुसन्धानेन तादृश बोधः सुलभ इतिवाच्यं, तदनभि-ज्ञस्य तादृश बोधानुदयापत्तेः । राज्ञः पुरुष इत्यत्र राजपदोत्तर षष्ठ्या राजसम्ब-न्धस्य, पुरुषपदेनच पुरुषस्याश्रयत्व संसर्ग-णोपस्थितिः । राजसम्बन्धाश्रयः पुरुष इति शाब्दधीः ॥

### अथ द्विगु लक्षणं ।

समान विभक्ति ( ६३ ) मत् पद प्रकृति-कत्वेसत्यभेद बोधक सङ्ख्या पूर्वपदत्वं द्वि-

---

( ६२ )—निरर्थकत्वादिति । तात्पर्य्य ग्राहकत्व-मेत्यादि ।

( ६३ )—समान विभक्तीति । पञ्चानां गौरिति विग्रहे पञ्चगौरित्यत्रातिव्याप्तिवारणाय सम्यक् ।

गुत्वं। पञ्चपुलीत्यादौ पञ्चानां पुलानां समाहार (६४) इति व्युत्पत्तिः। पुल-पञ्चकस्य समाहार इति बोधः। समाहारो ऽपेचा बुद्धि विशेष विषयत्वं, तत्र पुलपदेन लक्षणया पञ्चपुल समाहारो बोध्यते। पञ्च-पदञ्च तात्पर्य्यग्राहकमिति बोधः॥

अथ बहुव्रीहि लक्षणं।

नञ् तत्पुरुष भिन्नत्वेसति उत्तरपद लाक्षणिकपदत्वं बहुव्रीहित्वं। चित्रगुरि-त्यत्र, गोपदं गोस्वामिनि लाक्षणिकं, चित्र पदञ्च चित्ररूप विशिष्ट गवि लाक्षणिकं, तत्र चित्रपदार्थस्यापरपदार्थैकदेशे गवि अभेदान्वय स्तेन चित्राभिन्न गोस्वामीति वाक्यार्थबोधः। अथवा गो पदं चित्रगो-स्वामिनि लाक्षणिकं चित्रपदञ्च तात्पर्य्य

(६४)—समाहारइति। निपातातिरिक्त नामा-र्थयोर्भेदेनान्वयबोधं प्रति द्वारीभूत विभक्त्यर्थोप-स्थितेस्तत्त्वादेव।

ग्राहकमिति वोधः। तेन (६५) पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशे इति व्युत्पत्तेर्न भङ्गः। ननु चित्रगुरित्यादौ विनिगमनाविरहात्, उभयपदे च लक्षणा कथं नोच्यत इतिचेन्न। शक्तपद समभिव्याहारं विना लाक्षणिक पदस्याननुभाव कत्वाभावात्। नच पूर्वपदएव लक्षणेति वाच्यं, उत्तर पदार्थस्य लाक्षणिकेऽर्थे साक्षादन्वयाभावात्। नचोत्तरपदं तात्पर्य्यग्राहकमिति वाच्यं, पूर्वपदस्य गवोपस्थापकत्वाभावात्। नञ् तत्पुरुष स्थले तु अब्राह्मण इत्यादौ ब्राह्मण पदस्य तत्सदृशे लक्षणा। नञ् पदन्तु तात्पर्य्यग्राहकमित्यत उक्तं नञ् तत्पुरुष भिन्नमिति॥

अथ द्वन्द्व लक्षणं।

पदजन्य प्रतिपत्ति विषय भेद बोधकत्वे सति समान विभक्तिक पदत्वं द्वन्द्वत्वं।

---

(६५)—तेनेति। चित्रपदस्य तात्पर्य्य ग्राहकत्वादेव व्युत्पत्ते र्नभङ्ग इति।

स च द्वन्द्वार्थे, चकारार्थश्च भेदः । तत्र किं पदार्थभेदे किम्वा पदार्थतावच्छेदक भेदे शक्तिः । नाद्यः, "प्रमाण प्रमेयेत्यादि" गौतमन्यायादि सूत्रे, अर्थ्येकदन्तहेरम्ब इत्यादि पर्य्याये, नीलघटयोरभेद इत्यत्र च पदार्थाभेद सत्वेऽपि द्वन्द्वदर्शनात् । नान्त्यः, घटा इति स्वरूपैकशेषे द्वन्द्वापवादके व्यभिचारात् । कथमन्यथा द्वन्द्वापवादकत्वं, तस्योत्सर्गापवाद भावयोः समान विषयकत्वेन नियम्यितत्वात् । नच घटा इति स्वरूपैकशेषे किं मानमिति वाच्यं, । सकृदुच्चरितः शब्दः सकृदर्थं गमयतीत्यादि व्युत्पत्त्या त्रिचतुरादि घटोपस्थापकत्वात्तस्य । नच घट पदात् घटत्व सामान्यलक्षण प्रत्यासत्या घट मात्रोपस्थितौ किन्तेनेति वाच्यं, हरय इत्यत्र तस्यावश्यं कल्पनात्, नह्यत्र हरित्वमेकमस्ति, घटा इति सर्ववादि सिद्धैकशेष लोप प्रसङ्गः । अतएवात्रवदन्ति, क्वचित् पदार्थभेदे, क्वचित् पदार्थताव-

च्छेदक भेदे च द्वन्द्वस्य दर्शनादुभयभेदे ऽपि शक्तिः। नचाननुगमो जातः। पद- जन्य प्रतिपत्ति विषयत्वेनैवोभयानुगमात् तथाचात्र यद्रूपेणैव द्वन्द्वस्तत्रैव द्वित्व बहुत्वान्वयः। अनयो (६६) र्भेद सापेक्ष त्वात्, नचैकपदे द्वन्द्वापत्ति रितिवाच्यं "सुप्सुपेति" समासाधिकार सामान्या- भावात्। सच द्विविधः इतरेतरः, समा- हारश्च, इतरेतर स्थले साहित्यविशेष्यत्वेन भासते। समाहारेतु विशेषणत्वेन एव इति विशेषः। साहित्यं चैकक्रियान्व- यित्वं। तद्यथा धव खदिर पलाशां श्छिन- त्तीत्यत्र, धव खदिर पलाश प्रतियोगिकं यत् साहित्यं तन्निरूपितं यदवयव विभा- गरूप फलं तज्जनिका या च्छिदा क्रिया (६७) तदनुकूल कृतिमां श्चैत्र इतिबोधः।

(६६)—अनयोरिति। द्वित्व बहुत्वयो रित्यर्थः।

(६७)—छिदाक्रियेति। अवयव विभागानुकूल व्यापारश्छिद धात्वर्थः।

निरूपितत्वमत्र सामानाधिकरण्यं । धव खदिर पलाशा श्छिन्धीत्यत्र साहित्याश्र- यीभूतं यद्धवादि तत्कृत्ति यत् फलं लक्षणि- का या च्छिदाक्रिया तदन्वयित्वरूपं भासते । अथवा द्वन्दरेतर स्थले द्वित्वबहुत्व प्रकारक पदार्थोपस्थिति मात्रं, समाहा- रेतु प्रत्येक पदार्थगत मेकत्वं भासते, नतूभय साहित्यमेक क्रियान्वयित्व रूपं भासते । नच सहभाव विवक्षायां द्वन्द्वैकशेषयो रिति व्युत्पत्तिः कागति- रिति वाच्यं । तस्यापेक्षा बुद्धिविशेष विष- यत्वरूप साहित्यावगतत्वादिति ॥

## अथाव्ययीभाव लक्षणं ।

समास घटकत्वेसति नाना विभक्ति- ष्वेकरूपतावत् पदत्वमव्ययीभावत्वं । अत्र पूर्वपदार्थस्यैव प्राधान्यं भासते । उप- कुम्भमित्यत्र, कुम्भावधिकाल्पदेश संयो- गीति संक्षेपः ॥

## अथ निर्द्धारणं।

तत्र जाति गुणक्रियाणामन्यतमेन (६८) समुदायादेकदेश पृथक्करणं निर्द्धारणं। विलक्षण धर्म्मवत्वेन (६९) निरूपणं पृथक्करणं। एवञ्च (७०) यत्पद समभिव्याहृत षष्ठी तदुपस्थाप्य तदन्य पदार्थ समुदाये तद्धर्म्मवत्वाभावः षष्ठ्या उपस्थाप्यत इति बोध्यं। क्रमेणोदाहरणं। नराणां क्षत्रियः शूरतम इति सामान्यमध्ये क्षत्रियत्व जात्यवच्छिन्न नरे शौर्य्यं तदन्य नरे तदभाव इति भावाभावान्वयबोधः।

---

(६८) अन्यतमेनेति। विशेषणे तृतीया।

(६९)—विलक्षण धर्म्मवत्वेनेति। क्षत्रियान्य नरत्व व्यापकाभावप्रतियोगि शूरत्ववानरः क्षत्रिय इति धेय। धर्म्मनिष्ठ वैलक्षण्यं इतरव्यावर्त्तकत्वं शूरत्वादिमेति यावत्।

(७०)—एवञ्चेति। तथाच उद्देश्यतावच्छेदकाभावविशिष्ट स्वप्रकृत्यर्थतावच्छेदक व्यापकाभावप्रतियोगि विधेयकत्वं षष्ठ्यर्थं इतिभावः।

एवं गवां कृष्णा सम्पन्नक्षीरतमा इति गो सामान्यमध्ये कृष्णरूपवतर्यां गवि सम्पन्न क्षीरतमत्वं, तदन्य गवि तदभाव इति । एवं अश्वगानां रथिनः शीघ्रगतय इति, अश्वग सामान्यमध्ये रथारूढा अश्वगाः शीघ्रगामिनः, तदन्याश्वगा नेति भावाभावान्वयधीः ॥

## अथ एवकार विचारः ।

तस्य व्यवच्छेदकत्वमेव शक्यतावच्छेदकं, व्यवच्छेदः शक्य । व्यवच्छेदो विरहः । विशेषणसंगतायान् क्रिया समभिव्याहृतस्यैवकारस्यातयन्ता योगव्यवच्छेदे, विशेषण सङ्गतैवकारस्य स्त्रायोग व्यवच्छेदे, विशेष्य सङ्गतैवकारस्यान्ययोग व्यवच्छेदे शक्तिर्बोध्या । तत्रक्रमेणोदाहरणं । नीलं सरोजं भवतीयत्र इतयत्र शक्तिरन्वयितावच्छेदक सरोजत्व सामानाधिकरण्येन नीलवत्वान्वयः । तथाच सरोजं कचिन्नीलं, कचिदनीलमपि भवतीतयन्वय बोधः ।

शङ्खः पाण्डर एव इत्यत्र शङ्खे पाण्डरत्व तदयोग व्यवच्छेदश्च इति। तथाचार्थायिता वच्छेदक शङ्खत्वावच्छेदे पाण्डरत्वायोग व्यवच्छेदक इत्यन्वय बोधः। पार्थ एव धनुर्धर इत्यत्र, धनुर्धर पदं प्रकृष्ट धनुर्धर लक्षकं। तेन पार्थे प्रकृष्ट धनुर्धरत्वं। तदन्य स्मिं स्तदभाव इतिबोधः। तथाच पार्थः प्रकृष्टधनुर्धर स्तदन्यो नेत्यर्थः। अथवा धनुर्धरे पार्थतादात्म्ययोगः। तदन्यस्ता-दात्म्ययोगव्यवच्छेदश्चेति॥

## अथ सर्वनाम पदशक्ति विचारः।

तस्य शक्यं घटादिकं, शक्यतावच्छेद-कञ्च घटत्वादिकं। तमानयेत्यादौ शक्ति-ग्रहपदार्थोपस्थितिशाब्दबोधानां घटत्वा-दिप्रकारत्वात् तेषां समान प्रकारकत्वे-नैव कार्य्यकारणभावात्, बुद्धिविषयत्वेनैव तेषामनुगमः। बुद्धिविषयवृत्तित्वेन शक्य-तावच्छेदकानां चानुगम इतिविशेषः।

तथाच हरिपदादिवन्नानार्थमेव ( ७१ ), तात्पर्य्यग्रहस्तु प्रकरणादिवत् पूर्वमङ्केतो पस्थितिरिति नवीन तार्किकाः। केचित्तु सर्वनामपदस्य क्वचित् प्रक्रान्ते, क्वचित् प्रक्रम्यमानेच शक्तिः। उभयोरनुगमकं बुद्धिविषयत्वं तदेव शक्यतावच्छेदकमित्याहुः॥

अथ इवशब्द विचारः।

चन्द्रइव मुखमित्यत्र, चन्द्रपदं चन्द्रपर इवपदं सादृश्यपरं, मुखपदं मुखपरं, प्रतियोगित्वं संसर्गस्तत्र चन्द्रपदस्य पतियोगितया सादृश्ये सादृश्यस्याश्रयतया मुखेऽ-

( ७१ )—हरिपदादिवन्नानार्थमेवेति। अत्रेदमालोच्यते। घटपदात् घटोबोध्यव्य इति ईश्वर सङ्केते घटपदजन्य बोधविषयत्वप्रकारतानिरूपित घटत्वावच्छिन्न विषयताकत्वं कल्प्यते। तत्र सङ्केतीय विषयतावच्छेदकत्वस्य घटत्वे सत्वेन नियमतः घटपदात् घटत्वप्रकारेण बोधो जायते। एवं पशुपदाल्लोमवल्लाङ्गुलवान् बोध्यव्य इत्यत्र

---

तादृश सङ्केतीय विषयतावच्छेदकतावच्छेदकत्वस्य लोमत्वे सत्वेन लोमत्वेन लोमप्रकारक बोधो नियमतो भवति। इयमेव विशिष्टे शक्तिः। अथा-काशपदात् शब्दाश्रयो बोध्यव्य इत्यत्र शब्दाश्रय-त्वस्य गुरुतया आकाशस्य एकत्वेन च तादृश-सङ्केतीय विषयतावच्छेदकत्वं न कल्प्यते, प्रयोजन-विरहात्। तेनाकाशपदात् कदाचित् शब्दाश्रय-त्वेन बोधोजायते, कदाचिद्धर्म्मान्तरेणापीति न नियमः। इयमेवोपलक्षिते शक्तिः। नचाकाशपदात् शब्दाश्रयत्वेनेव प्रमेयत्वादिना आकाशविषयक शाब्दबोधापत्तिर्दुर्व्वारेतिवाच्यं, शक्तिज्ञान विशेष्य-तावच्छेदकत्वेन गृहीतानतिप्रसक्तधर्म्मेणैव तस्य भान नियमात्। एवं हरिपदात् विष्णुर्व्वोध्यव्यः, सूर्य्यो वोध्यव्य इत्यत्र विष्णुत्व सूर्य्यत्वादीनां अनुगता-नतिप्रसक्त लघुधर्म्माभावेन स्वतन्त्र तादृश तादृश सङ्केतीय विषयतावच्छेदकत्वं कल्प्यते। तेन हरि-पदस्य नानार्थत्वं। सर्व्वनामपदात् बुद्धिविषयता-वच्छेदक धर्म्मवान् बोध्यव्य इत्यत्र बुद्धिविषयता-वच्छेदकत्वस्य गुरुतया तत्र तादृशसङ्केतीय विष-

यतावच्छेदकतावच्छेदकत्वं न कल्प्यते। किन्तु तत्समानाधिकरण निरवच्छिन्नावच्छेदकत्वं कल्प्यते। तेन सर्व्वनामपदात् स्वरूपतः तत्तद्धर्म्म-प्रकारेण शाब्दबोधोपपत्तिर्ज्ज्ञायते। परन्तु तच्चोप-लक्षित बुद्धिविषयतावच्छेदकत्वेन अनुगत शक्ति सम्भवे ननानार्थत्वं। नचाकाशपदजन्य बोधवत् सर्व्वनामपदात् किञ्चिद्धर्म्मप्रकारेण घटत्वादीनां बोधो आवश्यक इतिवाच्यं। जात्यखण्डोपाध्यतिरिक्तस्य स्वरूपतोभानानङ्गीकारात् किञ्चिद्धर्म्मप्रकारेणैवा-काशस्य नियमतो भान, सर्व्वनाम शक्यतावच्छेदक घटत्वादीनां स्वरूपतो भानसम्भवादिति। नच शक्यतानवच्छेदकधर्म्मेण शक्त्यनुगमसम्भवे घटादि-पदशक्यतावच्छेदकत्वं बिनापि घटत्वादिना शक्त्य-नुगमसम्भवात्तत्र शक्यतावच्छेदकत्व कल्पनमयुक्त-मितिवाच्यं। घटादीनां जात्यतिरिक्ततया किञ्चि-द्धर्म्मप्रकारेण तस्य भाननियमायावच्छेदकत्वं कल्प्यं, प्रकृते सर्व्वनामशक्यतावच्छेदक घटत्वा-दीनां जातित्वेन स्वरूपतोऽवच्छेदकत्वंकल्पने बाधकाभावादिति तच्चिन्तनीयमिति।

न्वयः। तथाच चन्द्र प्रतियोगिक सादृश्या-श्रयं मुखमित्यन्वयधी। तत्र चन्द्रमिवमुखं पश्यामीत्यत्र चन्द्रपदोत्तर द्वितीयानुपपत्तेः। चन्द्रमुखयोरभेदाभावात्। अतएव चन्द्र पदं चन्द्रसदृशे लाक्षणिक, इवपद तात्-पर्य्यग्राहकं। चन्द्रपदोत्तर द्वितीयाया विशेषणविभक्तित्वेनाभेद बोधकत्वात्। चन्द्रसदृशाभिन्न मुखमहं पश्यामीति शाब्दधीः। निपातातिरिक्त नामार्थयोर्भेदे-नान्वयबोधं प्रति प्रकारीभूत विभक्त्यर्थो-पस्थितेस्तन्त्रत्वात्। तेन इवार्थान्वयबोधे न षष्ठ्यपेक्षा प्रथमा साधुत्वार्था इति निष्कर्षः॥

अथ उद्देश्य विधेय भावः।

तत्र उद्देश्यतावच्छेदकविधेययोः सामा-नाधिकरण्यं भासते (७२)। तेन घटो

---

(७२)—सामानाधिकरण्यं भासत इति। क्वचित् प्रयोज्यप्रयोजक भावः। तेन धनवान् सुखीत्यत्र, धनवान् धनप्रयोज्य सुखवानित्यन्वयबोधः। अतएव

नीलरूपवान् इत्यत्र घटत्वनीलरूपयोः सामानाधिकरण्यमवगाहते। एवं उद्देश्य-वाचकपदं प्रयोगः प्रागेव कर्त्तव्यः। अन्यथा नीलरूपवान् घट इत्यत्र घटोद्देश्यक नीलरूप विधेयक बोधः स्यात्। किन्तु नीलरूपवदुद्देश्यक घटत्वविधेयक बोध एव भवतीति। प्रकृतिविकृतिभावे प्ययं नियमो बोध्यः। यथा एकोवृक्षः पञ्च-नौका भवतीत्यत्र, वृक्षपदं वृक्षारम्भक द्रव्यपरं, नौकापदञ्च नौकारम्भक परं। तेन वृक्षारम्भक द्रव्यं नौकारम्भकं भवतीति। एकं सुवर्णं दशकुण्डलानि भवतीत्यत्रापिबोध्यं। अथ यूपाय दारु इत्यत्र दारुपदं दार्वारम्भक द्रव्यपरं, चतुर्थ्यर्थं उद्देश्यत्वं जनकत्वञ्च। तत्रोद्देश्यत्वस्य यूपे, जनकत्वस्य दारुणि अन्वयः। तेनोद्देश्यीभूत यूपजनकदार्ववयव द्रव्यमित्यन्वय-

---

विषयान्तर सञ्चार विरहेण सुखाभावेऽपि नासङ्गतिरिति ध्येय।

धीः। प्रकृतिविकाराभावे रन्धनाय स्थाली-त्यादौ तु चतुर्थ्यर्थः केवलमुद्दिश्यत्व । तेन रन्धनोद्देश्यक स्थालीयमिति बोध. । द्वय-मेव तादर्थ्ये चतुर्थी ॥

## अथ उपसर्ग विचारः।

तत्र उपसर्गस्य वाचकत्वं नास्ति, किन्तु द्योतकत्वमेव क्लृप्तशक्तिक धातोरेवार्थविशेषे तात्पर्य्यग्रहात्, प्रजयतीत्यादौ धातोरेव जयेशक्तिः। प्रकृष्टजये लक्षणा, तत्र प्रकृष्ट-जयबोधे प्रोपसर्गस्य तात्पर्य्यग्राहकत्व मात्रं । अथवा जिधातोरेव प्रकृष्टजये शक्तिः, साच प्रोपसर्गोपसन्धानेनैव वुध्यते। तथाचेयमौपसन्धानिकी शक्तिः । नच प्रतिष्ठतीत्यादौ प्रकृष्ट स्थितिविषयक बोधः कथं न जायते इतिवाच्यं । तत्र स्थिति-विपरीतार्थं गमनोपस्थितत्वात्। धातुना प्रोपसन्धानेनैव तदर्थो लक्षणया शक्त्या वा बोध्यते। अपिच प्रजयतीत्यत्र यदि प्रकृष्ट-जये धातो र्नशक्तिः, तदा प्रकृष्ट जयाश्रयबो-

धो नस्यात्। प्रकृत्यर्थान्वित स्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तेः श्रवणादिति ॥

अथ क्त्वा प्रत्यय विचारः ।

तस्यानन्तर्य्ये एव शक्तिः । भुक्त्वा व्रजतीत्यादौ भोजनानन्तरं व्रजनानुभव सिद्धत्वात्। भोजनव्रजनयोर्न समान कालत्वं, व्रजन पूर्वकाले भोजन वावगाहते, किन्तु समानकर्त्तृत्वमात्रोपलभ्यं । झनत् कृत्य पतति, मुखं सम्मील्य हसति, मुखं व्यादाय स्वपितीत्यादौ, पतन हसन स्वपनादीनां कथमानन्तर्य्यं, पतनाद्यनन्तरमेव झनत्काराद्युपलब्धेरितिवाच्यं । झनत्कारानन्तरमपि पतनादि सत्वान्न दोष इति निष्कर्षः ( ७२ ) ॥

---

( ७२ )—निष्कर्ष इति । अत्र प्रयोजकत्वं त्यप्रर्थं. । तथाच झनत्कारादि प्रयोजक पतनाद्याश्रय इतिबोधः । तेन झनत्काराद्यनन्तरं पतनाद्यसत्वेऽपि नासङ्गतिरितिध्येयं ।

## अथ नञर्थ कथनं ।

तत्र नञः संसर्गाभावान्योन्याभावावर्थौ। तत्रायं नियमः । यत्र विशेष्य विशेषणयो र्भावान्वये ऽभेदान्वयबोध स्तत्रैवान्योन्याभावो नञा बोध्यते। यथायं घटो नीलो, नायं नीलो घट इत्यत्र भावान्वये नीलघटयोरभेदो भासते, इत्यभावान्वये घटे नीलभेदो भासते । अतएव यजतिषु ये यजामहं करोति, नानुयाजेषु इत्यत्रानुयाजभिन्नेषु यजतिष्वेव येयजामहस्य कर्त्तव्यता भासते। यत्रतु प्रतियोग्यनुयोगिनोर्भावान्वये भेदो भासते, तत्र संसर्गाभावो नञा बोध्यते। यथा भूतले घटः, न भूतले घटः, पचति चैत्रो न पचति चैत्रः, चैत्रस्येदं न चैत्रस्येदमित्यादौ, भूतलादावनुयोगिनि घटकृतिस्वत्वानां भावो भासते। अभावान्वये तेषां (७४) संसर्गाभावो बोध्यते । तेन भूतलवृत्तित्वाभाव-

(७४)—तेषामिति। घटकृतिस्वत्वानामित्यर्थः।

वान् घटः। पाकानुकूल कृत्यभाववांश्चैत्रः। चैत्रस्त्वाभाववदिदमित्यन्वय बोधः। अत्रापि विशेषः, यत्रानुयोगिनि नामार्थ-प्रतियोगिक संसर्गाभावबोध स्तत्रावश्य-मनुयोगि पदे सप्तम्यपेक्षा कार्य्या। अत्र-चाभावान्वये अन्वयितावच्छेदकावच्छिन्न प्रतियोगिताकत्वं व्युत्पत्त्याभासते। नीलघटवति भूतले न घटः। एवं नील घटो न घटः इत्यप्रतीतेः। एवं पीतघट-वति न नीलघटः, पीतघटो न नीलघट इत्यादि प्रतीतेश्च। यत्रतु सामान्यो विधि-र्निषेधो वा विशेषनिषेधो विधिश्च तत्र सामान्यस्य विशेषेतर परत्वं कल्प्यते, पदार्थान्तर साकांक्ष (७५) विशेषमप-हाय, तद्भिन्नतरमेव सामान्यमन्वेति-व्युत्पत्तेः। यथा ब्राह्मणेभ्यो दधि दातव्यं कौण्डिन्याय न दातव्यमित्यत्र ब्राह्मण

---

(७५)—पदार्थान्तरसाकांक्षमिति। सामान्य साकांक्ष पदार्थातिरिक्त पदार्थे साकांक्षमित्यर्थः।

सामान्यस्य कौण्डिन्येतर परत्वं भासते। प्रकृतेतु ब्राह्मणसामान्यं दधिदाने साकांच कौण्डिन्यस्तु तदभावे साकांच इति सामान्य तद्दितरपरत्वं कल्प्यते । एवं ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याये-त्यत्र दध्यपेचया पदार्थान्तरं तक्रमित्यतो ब्राह्मणसामान्यस्य तद्दितरपरत्वं भासते। तेन कौण्डिन्यस्य ब्राह्मणत्व पुरस्कारेण दधिदानं न प्रसज्येत । अतएवात्र इयं व्युत्पत्तिर्विशेषे विधिनिषेधयोः सामान्य निषेधविध्योरुत्सर्गत्वे ऽङ्गाफलकत्वमिति। एवं "माहिंस्यात् सर्वाभूतानि, आग्नेयं श्वेतछागलमालभेत" इत्यत्रापि हिंसा-सामान्यं निषेधे साकांचं । हिंसा विशेषस्तु विधौ साकाच। अतो हिंसासामान्यस्य वैधेतरपरत्वेन वैधेतर हिंसैवानर्थहेतु-रिति निष्कर्षः। एवं नञः कुत्रचित् प्रसज्य प्रतिषेधे शक्तिः, क्वचित् लचणयापर्य्युदास बोधकत्वञ्च। यथा एकादश्यां न भुञ्जीत इत्यत्र भोजनस्य रागत एव एकादश्यामपि

प्रसक्तौ तत्प्रतिषेधो बोध्यते। नत्वेकादश्यां भिन्ने भुञ्जीतेति पर्य्युदासविधिः। भोजनस्य केवल रागप्राप्तत्वात् कथंपर्य्युदासः। द्वितीयं यथा। अथ श्राद्धममावस्यायां पितृभ्यो दद्यादित्यादि सामान्य शास्त्रं, तदनु, रात्रौ श्राद्धं नकुर्वीत सन्ध्ययोरुभयोरपि इति विशेषनिषेधस्तु पर्य्युदासः कल्प्यते। तेन रात्रि सन्ध्येतरायाममावस्यायां पितृभ्यो दद्यादिति पर्य्युदासाल्लभ्यते। नतु निषेध विधिना रात्रि सन्ध्याधिकरण श्राद्धे निषेधो ऽवगम्यते। सामान्य श्राद्धस्य रात्रिसन्ध्यांशे बाधापत्तेः। एवं न सगोत्रां न समानार्षेयीं भार्य्यां विन्देत इत्यादौ यदाच परिवेदनस्य ( ७६ ) शास्त्रतः प्राप्ति स्तदा पर्य्युदासः। यदातु रागतः प्राप्ति स्तदा प्रसज्यप्रतिषेध एवावगम्यते। केचित्तु अतिरात्रो षोडशिनं गृह्णीयान्नातिरात्रे षोडशिन मितिवत् अत्रापि इच्छा

---

( ७६ )—परिवेदनस्येति। विवाहस्येत्यर्थः।

विकल्प इति वदन्ति, तन्न तत्र नञः तुल्य-बलत्वात्। अत्रतु सामान्य विशेष भावेना-तुल्यबलवत्वादिति निष्कर्षः॥

अथ वैध हिंसा विचारः।

"माहिंस्यात् सर्वाभूतानीति" सामान्यशास्त्रं, "श्वेत छागलमालभेत" इति विशेषशास्त्रं, अत्रहिंसायां विधिनिषेधयो-रवधानेन विरोधात् सामान्यशास्त्रं विशेष शास्त्रेण बाध्यते। विरोधे हि बलीयसा दुर्बलं बाध्यते। विशेषशास्त्रन्तु बलीयो निरवकाशत्वात् सामान्यशास्त्रं दुर्बलं सावकाशत्वात् (७७)। तेनसामान्य-शास्त्रस्य वैधेतरपरत्वं। न खलु सर्वभूत हिंसाभाव विषयकं कार्य्यं इति निषेध विध्यर्थस्य बाधकं विना अग्निसोमीय पश्वा-लम्भन विषयकं कार्य्यं इति भावविध्यर्थ

---

(७७)—सावकाशत्वादिति। तथाहि निरवकाशाहि विधयः सावकाशान् विधीन् बाधन्ते इति-न्यायादिति।

उपपद्यत इति मीमांसकाः। नन्वेवं "श्येनेनाभिचरणयजीतेतत्र" श्येनस्य मत्रु वधरूपेष्टसाधनत्वं। "अभिचारो मूलकर्मचेति" मनुनोपपातक गणनमध्ये पाठादनिष्टसाधनत्वञ्चावगम्यते, तदेतत् कथं उपपद्यते इतिचेन्न। "आततायिनमायान्तं हन्यादेवाविचारयन्" इत्येकवाक्यतया आततायिन स्थले इष्टसाधनत्वं अनाततायि स्थलेतूपपातकत्वेन बलवदनिष्टसाधनत्वमित्यविरोधः कल्प्यते। पदार्थान्तर साकांक्षं विशेषमिति न्यायात्। तथाच वैधेतर हिंसाया एव नरक जनकत्वमिति कल्प्यते। टीकाकृत् वाचस्पतिमिश्र मतेतु सामान्यविशेषशास्त्रयोर्न विरोधोभिन्न विषयत्वात्। तथाहि माहिंस्यादिति हिंसाया अनर्थहेतुता (७८) ज्ञाप्यते। विशेष शास्त्रेणतु हिंसायाः क्रतूपकारकत्वं बोध्यते। अतएव वैध हिंसाया अपि नरक-

(७८)—अनर्थहेतुतेति। अनिष्ट साधनतेत्यर्थः।

जनकत्वं कल्प्यं । वैधहिंसायाः क्रतूपकारकत्वमेव नतु स्वर्गजनकत्वं; किन्तु क्रतोरेव स्वर्गजनकत्वं तत्तद्विशेषविध्यभिधानात् ॥

## अथ पदशक्ति निरूपणं ।

साच अस्माच्छब्दादयमर्थो वोद्धव्य इति ईश्वरेच्छा । आधुनिक सङ्केतेतु आधुनिक सङ्केत एव शक्तिरथवा तत्रापीश्वरेच्छा वर्त्तते । सर्वत्रैवं ईश्वरेच्छा विशेष एव शक्तिरिति निष्कर्षः । साच जातिविशिष्टे एव, जातौ व्यक्तौ वैशिष्टे च शक्तिः (৭৫) कल्प्यते, विशिष्टस्यैवान्वय बोधात् । तत्र जातेः प्रकारतया व्यक्तेर्विशेष्यतया वैशिष्टस्य संसर्गतया पदेनोपस्थाप्यते इतिनैयायिकाः । नैयायिकमतेऽपि घटत्वविशिष्टे

---

(৭৫)—वैशिष्टे च शक्तिरिति । तथाच "जात्याकृतिव्यक्तय पदार्थं" इति गौतमसूत्र । अथ कथं त्रयाणां वाच्यत्वमितिचेत्, तत्र ईश्वरेच्छाया आश्रयत्वसम्बन्धावच्छिन्ना या घटपदजन्यं बोधविषयत्व

शक्तावपि घटत्वमपि तदर्थः। तेन स्वार्था-न्वयरूपेण ज्ञाते लक्षणाभवति। केषाञ्चि-न्मतेतु व्यक्तावेव शक्ति जातिरवच्छेदिका व्यक्तेरनुगतत्वात् जात्यवच्छेदेन व्यक्तौ शक्तिग्रह. पदार्थोपस्थिति शाब्दबोधा-दिति। मीमांसकास्तु जातावेव शक्तिस्वीक-वात् व्यक्तेरन्वयबोधस्तु जातौ शक्त्यनुभवा-देव इति वदन्ति ॥ अथ अकारादिपञ्चा-शद्वर्णानां प्रत्येकं कुतशक्ति नैतावत्स्वेव अभेदेनैव वाच्यवाचक भावाभावात्। किन्तु एकाक्षर कोषोक्त वासुदेवादिष्वेव शक्तिरिति निष्कर्षः। यदातु पदशक्तिः पदार्थे स्फुरति तदेव पदशक्ति पदार्थाना-मनुभवः। तदनन्तरं शाब्दबोधकाले पद-श्रवण शक्तिस्मरणं तथाच पदार्थस्मरणं ततः शाब्दबोध इति॥

---

प्रकारता तन्निरूपित विशेष्यत्वं घटे, एवं अवच्छेद-कत्व सम्बन्धावच्छिन्ना या तादृश बोधविषयत्व प्रकारता तन्निरूपित विशेष्यत्वं घटत्वे, घटत्वबोध-

## अथ शक्तिग्राहक निरूपणं।

तत्र कारिका यथा—

" शक्तिग्रहं व्याकरणोपमान(८०)
कोषाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृते र्वदन्ति
सान्निध्यतः सिद्धपदस्य वृद्धाः ॥ "

तत्रोदाहरणं। व्याकरणेन धातु प्रकृति प्रत्ययानां शक्तिग्रहो जायते। यथा पाचक इत्यादौ। उपमा यथा गौरिव गवय इत्यादौ उपमानेन गवयपदस्य गोसादृश्य-विशिष्टे शक्तिग्रहः। कोषेण पर्यायपद

---

विषयत्वयो. संसर्गमर्य्यादया भासमानत्वं समवाय-स्येति नयाणा वाच्यत्वोपपत्तिः। तत्राश्रयत्व सम्ब-न्धावच्छिन्न तादृश प्रकारतानिरूपित विशेष्यत्व-मितरान्वय प्रयोजकमिति। तेन शक्तिभ्रमं विना न पदार्थतावच्छेदके इतरान्वय इति।

( ८० )—उपमानेति। अतिदेशवाक्यार्थ ज्ञान-जन्य ज्ञानमुपमानं। सादृश्यबोधक वाक्यं अति-देशवाक्यं। यथा गोसदृशो गवयपदवाच्य इति।

নানার্থপদানাং শক্তিগ্রহঃ। আপ্তবাক্যেন পিকঃ কোকিলং পদবাচ্য ইত্যাদিনা কোকিলপদস্য পিকে শক্তিগ্রহঃ। আপ্তশ্চ প্রকৃতবাক্যার্থগোচর যথার্থজ্ঞানবান্(৮১) ব্যবহারেণ যথা প্রযোজক বৃদ্ধেন ঘটমানয়েত্যুক্তং, তৎশ্রুত্বা প্রযোজ্য বৃদ্ধেন ঘট আনীতঃ তদবধার্য্য পার্শ্বস্থ বালো ঘটানয়নরূপ কার্য্যং ঘটমানয়েতি শব্দ প্রযোজ্যমিত্যবধারয়তি। পটমানয়েতি বাক্যাৎ পটানয়নরূপ কার্য্যং, পটমানয়েতি শব্দ প্রযোজ্যমিত্যবধারয়তি। তদনন্তর ঘটপদং ঘটেশক্তং, পটপদং পটেশক্তং, ঘটপদং ঘটে দ্বিতীয়াবিভক্তিঃ কর্ম্মতায়াং আঙ্পূর্ব্ব নীধাতুরানয়নে হিপদং কর্তৃশক্তং,

(৮১)—যথার্থজ্ঞানবানিতি। ভ্রমপ্রমাদ বিপ্রলিপ্সাদি শূন্যত্বং। তথাচ তৎপ্রযোজ্য ইচ্ছয়া উচ্চরিতত্বং আপ্তবাক্যত্বং। তেন কালান্তরীয় দোষজন্য তৎপুরুষোচ্চরিত বাধিতার্থবোধক বাক্যে নাতি প্রসঙ্গঃ।

इति विच्छिन्न शक्तिग्रहो जायते। वाक्य-शेषाद्यथा, "यवमयश्चरुर्भवतीति" श्रुतौ यवपदस्य दीर्घशूकविशेषे शिष्टानां कङ्गौच म्लेच्छानां प्रयोगदर्शनात् यवपदार्थे सन्देहे, "वसन्ते सर्वशस्यानां जायते पत्र-शातन। मोदमानाश्चतिष्ठन्ति यवाः कणि-शशालिनः॥" इत्यादिवाक्य शेषाद्दीर्घशूक एव शक्तिग्रहः। विवरणादपि यथा, विव-रणं शब्दान्तरेण तदर्थ कथनं यथा, घटो नास्तीत्यस्य कलसो नास्तीत्यनेन घटपदस्य कलसे शक्तिग्रहः। एवं सान्निध्यादपि यथा "इह सहकारतरौ मधुरं रौति पिक" इत्यत्र प्रसिद्ध सहकारसान्निध्यात् पिकपदस्य कोकिले शक्तिग्रहो (८२) जायते॥

अथ शब्द विचारः।

सच द्विविधः। वर्णात्मको ध्वन्यात्मक-

---

(८२)—कोकिले शक्तिग्रहइति। इतरबाध सह-कारेणेत्यादिः।

শ্চেতি। তত্র বর্ণএব(৮৩)সাধুশব্দঃ,সোঽপি-দ্বিবিধোবাচকো লাক্ষণিকশ্চেতি। বাচকো-ঽপি চতুর্বিধঃ, যৌগিকঃ, রূঢ়ঃ, যোগরূঢ়ঃ, যৌগিকরূঢ়শ্চেতি ভেদাত্। যত্র সমুদায

---

(৮৩)—বর্ণএবেতি। অথ শক্ত্যাদি জ্ঞানদ্বারাঽর্থ-বোধকত্বং সাধুত্বং। প্রাথমিক শক্তিগ্রহস্তু লৌকি-কার্থে ব্যবহারতঃ, অলৌকিকেতু তদসম্ভবেন স্বর-ব্যঞ্জনাদিজ্ঞানদ্বারা প্রাথমিক শক্তিগ্রহঃ। তেচ ধ্বনিবর্ণ সাধারণ স্বরাঃ জ্ঞাতা উপযুজ্যন্তে। তথাহি, ষড়্জর্ষভগান্ধারমধ্যমপঞ্চমধৈবতনিষা-দেষু সপ্তসু স্বরেষু বর্ণং বিনা, ধ্বনিঃ স্বাতন্ত্র্যেণ প্রতিভাতি। অমরসিংহেনাপি তন্ত্রীকণ্ঠোত্থিতাঃ স্বরা ইত্যুক্তং। তথাচ, "ষড়্জ রৌতি ময়ূরস্তু গাবো নর্দ্দন্তি চর্ষভং। অজা রৌতিতু গান্ধারং ক্রৌঞ্চং ক্বণতি মধ্যমং॥ পুষ্পসাধারণে কালে কোকি-লো রৌতি পঞ্চমং। ধৈবত কুঞ্জরো রৌতি নিষাদং হ্রেষতে হয়ঃ॥" ইতি রায়মুকুটধৃত সঙ্গীতবচনমিতি। ধ্বনিভেদজ্ঞানন্তু স্বরভেদেন ভবতি; নতু বস্তুত ইতি। ধ্বনিমন্তরেণ বর্ণো ন প্রকাশতে। অর্থাবরোধায়

शक्ति निरपेक्षेणावयव शक्त्यैव पदार्थोप-
स्थितिः सएव यौगिकः, यथा पाचकादिः,
पाककर्त्तृत्वादि पुरस्कारेण उपस्थितिः।
यत्रावयव शक्ति नैरपेक्ष्येण समुदाय
शक्त्यैव पदार्थोपस्थितिः सएव रूढ़ः, यथा

---

ध्वनि वर्णात्मनाविर्भवति। नन्वर्थावरोधाय परा-
पश्यन्ती मध्यमा वैखरीत्यरूपावस्थः सन् ध्वनि-
रपि प्रकाशते। तथाच गवादीनां वत्स प्रभृत्या-
वाहनाद्यर्थं नादः प्रवर्त्तते। अतएवोक्तं स्वरशास्त्रे,
"शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गीतिरसं फणी। हरि-
र्वेत्ति हरोवेत्ति नारदो वेत्ति वानवा॥" इति-
चेत् सत्यं गवादीनां स्वरसात्र प्रतीतिः। तेषां
कियद्विषयक ज्ञानमस्ति नतु धी मेधा विज्ञानानि
तानितु वर्णज्ञानादृते न सम्भवन्ति। नच वर्णस्थले
ध्वनिसत्वे मानाभावः, तदुत्पादक शङ्खाद्यभावेन
तदसम्भवश्चेतिवाच्यं। ककाराद्युच्चारणस्थले तत्तत्-
स्थानस्य जिह्वायां ईषदन्तरपाते वर्णानुत्पत्तेश्च दर्श-
ना जिह्वाभिघातज वायु कण्ठसंयोगादे र्ध्वनिजन-
कत्व कल्पनात् तस्यच वर्णोत्पत्तिस्थलेऽपि सत्वात्

यो मण्डपादिः, मण्डपान कर्त्तरितु मण्डप पदं लाक्षणिकं, गृहेतु वाचकं। यत्रतु अवयव शक्ति सापेक्षैव समुदाय शक्त्या पदार्थोपस्थितिः सएव योगरूढ़ः, यथा पङ्कजादिः, पङ्कजनि कर्त्तृ पद्मत्वमेव शक्यतावच्छेदकं। यत्रतु केवलावयव शक्त्या कुमुदोपस्थितिः पद्मोपस्थिति र्वा तत्र पङ्कज पदं लाक्षणिकमेव। यत्रतु यौगिकार्थं रूढ्यर्थयो र्युगपत् स्वातन्त्र्येणो-पस्थितिः स यौगिकरूढ़ः, यथा उद्भि-

---

ध्वनि वर्ण भेदेन शब्दविभागो ऽनुपपन्न इतिचेन्नैवं, ईश्वर विषयक ज्ञानमपीश्वरशब्दं विना न भवति। एवमनिर्द्देश्यं निर्गुण ब्रह्माप्यन्धकारावस्थित वस्तु-प्रकाशक प्रदीपेनेव तत्प्रकाशक निर्गुण शब्देनैव व्यज्यते। अतएव ध्वनिं दुरुपायमत्वा, "शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गीति रसं फणी। एकन्तु कविता तत्वमीश्वरो वेत्ति नापरः॥" इत्युक्तं, तथाच उप-मेय सङ्करेऽपि उपमान्यसङ्करेण विभागोपपत्ति रितिदिक्।

यत् ययावृत्त्या ऽन्योऽर्थो लक्ष्यते उपस्थाप्यते, सैव वृत्तिर्लक्षणा । सैव च मुख्यार्थ सम्बन्ध एव, स च सम्बन्धो यदा पदस्यान्यपदार्थे गृहीत स्तदैव पद सम्बन्ध पदार्थानामनुभवस्तदनन्तरं शाब्दबोधकाले पदश्रवणं वृत्तिःस्मरणं तयाच पदार्थस्मरणम्, ततः शाब्दबोधः । तेन क्वचित् रूढ़िहेतुका क्वचित् प्रयोजनहेतुका च आरोपितक्रिया, आरोपितः शब्दव्यापारः । तत्र रूढ़िहेतुका, यथा कर्म्मणि कुशल इत्यत्र मुख्यार्थस्य दर्भग्रहणादे रयोगे विवेचकत्वादौ च तत् सम्बन्धसत्वे कार्य्यनिपुणे लक्षणा रूढ़ितः प्रसिद्धत्वात् । यत्रतु पदान्तर समभिव्याहारंविना केवल कुशल पदं प्रयुज्यते तत्रावयव शक्त्या कुश ग्रहणकर्त्तरि शक्तिरिति बोध्यं । एवं देवपद समभिव्याहारं विना यत्र मण्डपपदं प्रयुज्यते तत्र वाचकं । प्रयोजनहेतुका यथा गङ्गायां घोषः प्रतिवसतीत्यत्र मुख्यार्थस्य-निवासस्यायोगे सामीप्यात्मक् तत्सम्बन्धं

सति तीरे लक्षणा, शैत्य पावनत्वादि प्रयोजनात् कल्प्यते। गङ्गा तटे घोषः प्रतिवसतीत्यादौ तु तादृश प्रयोजनानवगते नै लक्षणादरः क्रियते। यत्र तु रूढ़िं प्रयोजनञ्च विना लक्षणा क्रियते तत्र गौणी लक्षणा यथा, अग्निर्म्माणवकः, गौर्वाह्निक इत्यादौ सादृश्ये लक्षणा। लक्षणाबीजन्तु क्वचिदन्वयानुपपत्तिः, क्वचित्तात्पर्य्यानुपपत्तिश्चेति। यथा मञ्चाः क्रोशन्तीत्यादौ अचेतनस्य मञ्चस्य क्रोशान्वयानुपपत्त्या मञ्चपदे मञ्चस्थ पुरुषे लक्षणा। एवं कुन्ताः प्रविशन्तीत्यत्रान्वय सत्त्वेऽपि तात्पर्य्यानुपपत्त्या कुन्तपदे कुन्तधरे लक्षणा इति प्राचीनाः। नव्यास्तु सर्व्वत्र तात्पर्य्यानुपपत्तिरेव लक्षणाया बीजमिति। साच पुनर्लक्षणा द्विविधा। अजहत्स्वार्था, जहत्स्वार्था च। काकेभ्यो दधि रक्ष्यता-मित्यादावजहत्स्वार्था तेन काकपदं दध्युपघातकपरं लक्षतावच्छेदक दध्युपघातकत्वेन काककुक्कुरादि सर्व्वमुपस्थाप्यते

काव्कपदेन। एवं गङ्गायां घोष इत्यादौ जहत्स्वार्था एव तेन गङ्गापदेन तीरमेवोपस्थाप्यते ( ८४ )॥

अथ वीप्सा विचारः।

तत्र वीप्सा व्यापकता तदभिधाने द्विर्वचनं साधु। तत्र यत्पदस्य द्विरुक्ति स्तदर्थतावच्छेदक निरूपित समभिव्याहृत पदोपस्थाप्य पदार्थव्यापकता बोध्यते। यथा गृहे गृहे ऽश्वा इत्यादौ गृहपदं गृहैकदेशपरं तेन गृहत्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वमश्वेषु बोध्यते।

---

( ८४ )—तीरमेवोपस्थाप्यत इति। अथ यदि गङ्गापदात् तीरमात्र विषयक शाब्दबोध स्वीकारे समुद्रादि तीर बोधोत्पत्तौ पावनत्वादि प्रयोजनानपेक्षणात् प्रयोजन हेतुकत्वानुपपत्तिः। यदि च गङ्गातीर बोधोत्पत्तिस्तदा स्वार्थग्रहणेन जहत्स्वार्थत्वानुपपत्तिरितिचेन्न, स्वार्थस्यलक्षतावच्छेदक घटकत्वेऽपि लक्षतावच्छेदकावच्छिन्नत्वेन तदग्रहणात् लक्षणाया जहत्स्वार्थत्वोपपत्तेरिति।

एवं अश्वयुक् कृष्णपक्षे तु श्राद्धं कुर्य्याद्दिने-दिने इत्यत्र दिनपदं तिथिपरं तेनाश्वयुक् कृष्णपक्षीय तिथित्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं श्राद्धे भासते। एवमहरहः सन्ध्यामुपासीत इत्यत्राहः पदं सन्ध्यावन्दन कालत्रय परं, तथाच तत्तत् कालोपाधिमन्निष्ठाभावाप्रतियोगित्वं सन्ध्यावन्दने भासते॥

### अथ शाब्दबोधान्तरं।

आत्मनः पुत्रमिच्छतीत्याद्यर्थे “सुप आत्मनः क्यच्” इत्यादिना क्यच्प्रत्ययः। तेन पुत्रीयति इत्यादि सिद्धं। तथाच पुत्रपदोत्तर क्यच् प्रत्ययस्य आत्मसम्बन्धि पुत्र विषयिणीच्छार्थः, आख्यातस्याश्रयत्वं, तदुपरि आश्रयत्वं संसर्गेणात्मसम्बन्धि पुत्रविषयकेच्छाश्रयत्वाश्रय इति शाब्दधीः। भार्य्यीयति, पयस्यति, राजीयति, इत्यादीनां मन्नेवार्थे काम्यच् प्रत्ययोपि साधुः। पुत्रकाम्यतीत्यादि प्रयोगः, आत्मसम्बन्धि

पुत्रविषयकेच्छाश्रयत्वाश्रय इतिधीः । पुत्र-मिवाचरति भृत्यमित्यर्थे "उपमानादा-चारे" इत्यादिना क्यच् प्रत्ययः । पुत्रीयति भृत्यमितिसिद्धं । आचार आचरण व्यवहार इतियावत् । तेन भृत्यविषयक पुत्रतुल्य व्यव-हारानुकूल कृत्याश्रय इति शाब्दधीः । एवं खर आत्मानं अश्वमिवाचरतीत्यर्थे "सर्व-प्रातिपदिकेभ्यः क्विब्वावक्तव्यः" इत्यादिना क्विप् । तेनाश्वतिखर इति प्रयोगः । अश्व-तुल्य व्यवहारानुकूल कृत्याश्रयः खर इति शाब्दधीः । प्रभवति भृत्य' रिपवन्ति मित्र इत्यादि सिद्धं । अधिकरण इत्याचारेऽपि क्यच्प्रत्ययः । प्रासादीयति कुट्यां पर्य्यङ्की-यति मञ्चके. तेन कुटीरविषयक प्रासादा-धिकरणक व्यवहारानुकूल कृत्याश्रय इति शाब्दधीः । वृद्धः शिशुमिवाचरति इत्यर्थे "कर्त्तुः क्यङ् सलोपश्च" इति क्यङ् प्रत्य-यः । तेन शिशूयते वृद्धः. शिशुतुल्य व्यवहारा-नुकूल कृत्याश्रय इति बोधः । एवं एरण्डी-

ऽपि द्रुमायते, काकोऽपि मयूरायते इत्यादि सिद्धं ॥

अथ एकादि संख्याशब्द विचारः।

एकं दशं शतञ्चैव सहस्रमयुतन्तथा।
लक्षञ्च नियुतञ्चैव कोटिरर्बुदमेवच॥
वृन्दं खर्वो निखर्वश्च शङ्कपद्मौच सागरः।
अन्त्यं मध्यं परार्द्धञ्च दशवृद्ध्या यथोत्तर॥

तत्र एकाद्यष्टादशान्ता सङ्ख्याशब्दाः सङ्ख्याविशिष्ट एव शक्ताः। केवल सङ्ख्या-परिस्थिति लक्षणयैवेति बोध्यं। ऊनविंश-त्यादेस्तूभयत्रैव। तत्र विशेषः। यत्र सामानाधिकरण्येनान्वय स्तत्र सङ्ख्या-विशिष्टं, यत्र वैयधिकरण्येन तत्र सङ्ख्या-यामेव। ऊनविंशतिर्ब्राह्मणाः ब्राह्मणानां ऊनविंशतिरिति। तथापि विशेषः। एषां वि शत्यादि शब्दानां एकवचनान्ततैव। यत्तु एतद्वादीनां द्वित्वबहुत्वं तात्पर्य्य-विषयस्तत्र द्विवचनादिकमपि(८५)प्रयोज्यं।

---

(८५)—द्विवचनादिकमपीति। घटावानय इत्यत्र

एवं एकादिचतुरान्ता वाच्यलिङ्गतया त्रिषुवर्त्तन्ते । पञ्चादयस्तु सर्वदा अजहल्लिङ्गा । एको ब्राह्मण इत्यत्र जातिपुरस्कारेण ब्राह्मण मात्रोपस्थितावेकपदं सार्थक । द्वौ ब्राह्मणौ इत्यत्र द्विपदं द्वित्वबोधाय सार्थकं । त्रयो ब्राह्मणाः चत्वारो-ब्राह्मणाः पञ्चषड्वा इत्यादौतु बहुवचनेन बहुत्वावच्छिन्न ब्राह्मणोपस्थितौ त्रिचतुरादीनां तद्व्यावर्त्तक तया सार्थकत्वमेवेति निष्कर्षः ॥

---

घटद्वय कर्म्मताकानयनमिति बोधः । आङ्पूर्व्व नीधातुना समीपदेश संयोगानुकूल क्रियानुकूल व्यापारो बोध्यते । तत्र धात्वर्थतावच्छेदकीभूत क्रियायाम् आधेयतया घटद्वयस्यान्वयः । तच्च घट-पर्य्याप्त द्वित्वावच्छिन्नस्य परम्परया निरूपकत्वस्य धात्वर्थीभूत क्रियायामन्वयः । नतु फलीभूत क्रिया याम् । अन्यथा फलीभूत क्रियायाः विभिन्नत्वेन द्वित्वावच्छिन्नस्य तत्र बाधितत्वात्तादृश वाक्यस्या-प्रामाण्यापत्तेः । एकवचनस्थलेतु एकत्वस्य पर्य्याप्ति-

आलोक्य विविधग्रन्थं विचार्य्यंच पुनः पुनः ।
कृतेयं जयकृष्णेन शब्दार्थसारमञ्जरी ॥

इति श्री जयकृष्ण तर्कालङ्कार भट्टाचार्य्य विरचिता शब्दार्थ सारमञ्जरी समाप्ता ॥

---

सम्बन्धे मानाभावेन तदसम्भवात्, "पशुना रुद्रं यजेत" इत्यत्र पशुनिष्ठैकत्वस्य स्वाश्रय पशुकरणकत्व स्वानाश्रय पशुकरणकत्व एतदुभय सम्बन्धेन एकत्वस्य यागेऽन्वय इत्याद्यांविस्तर. ॥

इति श्री वैकुण्ठनाथ न्यायरत्न भट्टाचार्य्य विरचित शब्दार्थसारमञ्जरी विवरणं समाप्तं ॥

---

| पृ० । | पं० | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ८ । | १२ | नष्टत्यादौ | नष्ट इत्यादौ |
| ११ । | १४ | यस्मिन् | यस्मिन् |
| १२ । | १८ | कर्माख्यात | कर्त्राख्यात |
| २६ । | ११ | भापते | भामते |
| ३३ । | ६ | ध्वंस | ध्वंस |
| ७४ । | ७ | मङ्केतेतु | सङ्केतेतु |
| ७६ । | १४ | वियेष्यत्व | विशेष्यत्व |

श्रीगणेशायनमः।

# अथ तत्वदर्पणं।

—…०*॥*॥*० …—

श्री विश्वेशं नमस्कृत्य ढुण्ढिराजञ्च तत्सुतं।
श्रीमद्वैकुण्ठनाथेन क्रियते तत्वदर्पणं॥

अमुष्य संसारतरोरबोध
मूलस्य नामूल विमूलनाय।
विश्वेश्वराराधनबीज जातात्
तत्वप्रबोधादपरोऽभ्युपायः॥

तथाहि "आत्मावाऽरे श्रोतव्यो मन्तव्य इति" श्रुत्यां स्वात्मश्रवणप्रामायां माण्डुक्योपनिषद्।

"ओं इत्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कारएव॥"

अत्रायमभिसन्धिः। वाच्य वाचकयोरभेदात्। कार्य्यसत्तायाः कारणसत्व नियमात्। कार्य्यंप

कारणानुमेयत्वाच्च। तत्र सत्ता त्रिविधा। पारमार्थिक व्यवहारिक प्रातिभासिक भेदात्। पारमार्थिक सत्तापूर्विका व्यवहारिक सत्ता तत्पूर्विका प्रातिभासिक सत्ता। एवञ्च रज्जुसर्पोभय व्यवहारपूर्वकं रज्जुसर्परूप प्रातिभासिक सत्वं। यथात्र रज्ज्वाद्यताज्ञानतः रज्जुसर्पमुद्भवति। रज्जुज्ञानेन तदज्ञान निवृत्तौ कारणबाधानामरूप कार्य्यबाधः। एतेनाधिष्ठानज्ञानेन तदज्ञान निवृत्तिरुपपन्ना। तथा रज्ज्वधिष्ठान ज्ञानेन तदज्ञाननिवृत्तौ रज्जुनिवृत्तिः। साच सदसतोरसामानाधिकरण्य नियमात्। रज्जुसत्तायाः पारमार्थिकत्व निवृत्तिः नतु दृढ़त्वनयोग्यता निवृत्तिः। तेन कार्य्यसत्तयाऽनुमेय पारमार्थिक सत्ताश्रयत्वेन धर्म्मीग्राहक प्रमाणेन लाघवाद्द्वैतसिद्धिः। साच प्रकृतेः पुरुषमन्तरानुपपद्यमानं स्वकीय भोगापवर्गार्थं पुरुषसिद्धौ स्वकार्य्यदेहेन्द्रियादीनां विचित्राणां नानात्वेन भोगवैचित्र्यं सिद्धं। पुरुषस्य प्रकृतेश्च एकत्वेन मोक्षस्य एकरूपता सिद्धौ तस्य नानात्वं निर्य्युक्तिकमेव।

तथाच श्रुत्याऽभेदेन वाच्यवाचकयोर्ज्ञानानन्तरं तत्राप्रामाण्यादिकमनुमानेन निरस्य निश्चितार्थं निदिध्यासनेन रजस्तमसोरभिभवेन सत्वस्वभाव प्रादुर्भावात् स्वप्रकाशस्य तत्वमसीत्यादिवाक्यार्थस्याखण्डस्याव्यपदेश्यस्य विश्वरूपस्य पुरुषस्य स्वरूपेणावस्थानमिति सर्वप्रपञ्चोपशम इति संक्षेपः ॥

---

इति श्री वैकुण्ठनाथ न्यायरत्न भट्टाचार्य्य विरचित तत्वदर्पणं समाप्तं ।

---

श्रीः । श्रीः । श्रीः ।

अमरैर्धीरवरै र्विलोक्येमां लिपिं मम ।
दूषणं भूषणं वाच सम्यक्लेख्यं विचारतः ॥

शुभमस्तु ।

—००✻०✻०✻००—



## विज्ञापन।

मूल्य डा० ख०

सारमञ्जरी। (विवरण सहित) ।✓)... ...)॥

सङ्केतनिधिः। (इसमें जातक प्रकरण जन्मकुण्डलीफल सबप्रकारके प्रश्नगणनफल प्रभृति लिखे हैं। यह ज्योतिष का बहुत उत्तम ग्रन्थ है!) ।✓)... ...)॥

### भाषा काव्य।

१ रसकौमुदी। (अर्थात् बिहारी सतसैया के उत्तमोत्तम दोहोंपर सवैया कवित्त)। ॥) ... ... )॥

२ इश्क अजायब। (चौबोला छन्दमें। इसमें इश्क छकीकी का वर्णन है) ✓)॥ ... ... )॥

३ शतरञ्ज विलास। (इसमें अज्ञान शतरञ्ज और विवेक शतरञ्ज का खेल है) ✓)॥ ... ... )॥

४ ऋतु रङ्ग। (षट् ऋतु विभाग और पद्यप्रभाकर। एक जिल्द में) ✓)॥ ... ... )॥